ओ३म्

# चारुचरितामृतम्

[प्रथमो भागः]



ब्रह्मर्षिदयानन्ददिग्विजयमहाकाव्यकारेण
श्रीदिव्यानन्दमुनिना मेधाव्रताचार्येण प्रणीतम् ।



"आर्येन्द्रपुण्यपदपङ्कजषट्पदेन,
'मेधाव्रतेन' विहितं वनिनां वरेण।
आर्येन्द्रचारुचरितामृतमार्यबाले-
विद्यार्थिनां हितकरं रुचिरं प्रपेयम् ॥"

०२८ वि०
७१ ई०

मूल्यम् १.००
एकरूप्यकम्

# चारुचरितामृते प्रथमभागे

## विषय सूचिः



### चारुचरितामृतस्य द्वितीयभागेऽपि द्वादशार्येन्द्राणां चरितानि गुम्फितानीमानि भवेयुः —

१. राजोपदेशको ब्र० नित्यानन्दस्वामी
२. महात्मा श्रीनारायणस्वामी ।
३. वीतरागः श्रीस्वामी सर्वदानन्दः ।
४. पण्डितश्रीभगवान्दीनमिश्रः ।
५. दर्शनाचार्यः श्रीस्वामिवर आत्मानन्दः
६. विद्वद्वर्यः श्रीस्वामिवेदानन्दः ।
७. आत्मारामोऽमृतसरनिवासी ।
८. देशभक्तः श्री कु. चांदकरण शारदा ।
९. महात्मा श्रीबुद्धः [गौतमः] ।
१०. स्वामी रामतीर्थः ।
११. श्रीशङ्कराचार्यः ।
१२. महात्मा मोहनदासो गांधी ।

# किञ्चित्प्रास्ताविकम्

अनेकगद्यपद्यात्मकसंस्कृतग्रन्थप्रणयनग्रथितयशसां कविरत्नादिपदविभूषितानां स्वर्गीयमुनिपुङ्गवश्रीलदिव्यानन्दमहाभागानां मेधाव्रताभिधानेन संस्कृतवाङ्मये विश्रुतानां प्रसन्नया श्रुतिमधुरया सरलया च देवगिरा संग्रथितं "चारुचरितामृतम्" आद्योपान्तमध्यगीषि सावहितेन चेतसा निरीक्ष्य च निरचैषं यत्कविमूर्द्धन्यस्य गीर्वाणवाण्यावर्णने यथाजस्रं काव्यवाक्प्रवाहोऽस्खलद्गतिश्च गद्येऽपि सरस्वतीसरस्स्नातस्यात्रभवतो लेखनीचारित्र्यस्य विचित्रचित्रणकलाचातुर्यमातनोति ।

यद्यपि—अनवद्यगद्यलेखनं पद्यापेक्षया दुष्करम् "गद्यं कवीनां निकषं वदन्ति" पुनरपि गद्येऽत्र प्रसादगुणभरैरर्थगौरवनिर्भरैश्च न क्वापि स्फुटता अपाकृता ।

निसर्गत एव महीयसां चारुचरित्राणि किमपि विचित्रमेव प्रभावयितुं स्वान्तेषु प्रभवन्ति, तत्र चापि संस्कृत्य संस्कृत्य विन्यस्तानि स्थाने-स्थाने च भावोन्मेषविलासीनि वचनानि कस्य सहृदयस्य न हृदयङ्गमानि भविष्यन्ति ?

देशोऽयं भारतवर्षोऽवदातचरितानामृषीणां मुनिपुंगवानाञ्च, यत्रत्या नीतिनिपुणा राजनीतिनिष्णाता उच्चैरुद्घोषयामासुः "स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ।"

अत्रैव देशे पाश्चात्यसंस्काराणां प्रचुरप्रचारेण प्रसारेण च चरित्र-शिक्षणप्रवृत्तानां सत्यसंस्काराणां सदाचारस्य च विप्रलोप एव प्रायेण समजनि । पाश्चात्यसंस्काराच्छन्नः सम्मूर्च्छितोऽयं जगद्गुरुमभिमन्यमानो देशः । सर्वत्र दुश्चरित्रप्रधाना भावना नितरां स्फातिमुपेयुषी दृश्यते । चरित्रधनिनां मानिनां देशे दुर्वृत्ता पिशाची यत्र-तत्र स्वकीयं ताण्डवं प्रदर्शयन्ती वृत्तवतां जनानां मानसमुद्वेजयत्यजस्रम् । वृत्तमधोऽधः पातिनी चेयं कालरात्रिरद्यत्वे विश्वाकाशं परितोऽभिव्याप्य विजृम्भमाणा दरीदृश्यते । तत्राक्षय-

लोकभास्वरं चारुचरित्रमयं प्रदीपं प्रज्वलयितुं प्रभुश्चेच्चरित्राचरणोन्नमितजीवनानामेव सच्चरित्रम् ।

सतां हि चरित्रमधीयानस्य दिवाकरः स्वकिरणैर्नलिनीदलमिव विकासयति बुद्धिम् ।

"अहीनो वित्ततो हीनो वृत्ततस्तु हतो हतः" इति प्राचीनमपि-अर्वाचीनम्, विश्वविदितमपि-अविदितम्, दृश्यमानमपि अदृश्यं सुविचारं सुविचार्य जीवनमुन्निनीषूणां सन्मार्गमभिनिविविक्षूणां जनानां कृते दीव्यानन्दानुभूतैस्तत्रभवद्भिर्दीव्यानन्दकविश्रेष्ठैर्दीव्यानन्दप्राप्तये दीव्यपुरुषाणां संस्कृतजीवनं संस्कृतवाचि समचायि ।

सत्स्वपि–आर्यभाषायां चारुचरित्रेष्वस्य कावश्यकता संस्कृतानुवादस्येत्यपि केचिद् विद्वांसः संशयीरन् संस्कृतवाङ्मयस्य महत्वमजानानाः । तदेवं संशयानानां पुरस्तान्निवेद्यते चिरन्तनस्य ज्ञानविज्ञानगतस्य शेवधिभूतेयं संस्कृतभाषा । संस्कृतबोधमन्तरा राष्ट्रभाषायाः परिपुष्टं ज्ञानं न सम्भाव्यते । निखिलापि भारतीया संस्कृतिः संस्कृत एव सुरक्षिताऽस्ति । अद्यत्वेऽपि संस्कृतसाहित्यं संस्कृतिं च परिचक्ष्य वैदेशिकानां विदुषां कृते नास्त्यपूर्वं किमपि भारतस्य कुतूहलावहम् । संस्कृतवाङ्मयमेवैकलं भारतीयममूल्यं वस्तु । आधुनिकी वैज्ञानिकी या काप्युन्नतिरभौतिकी सा तु सर्वा अन्यदेशीयानामनुकृतिरेव । ये च प्रान्तीयभाषासु प्रौढिं प्राप्तुं कामयन्ते, तैस्तु न कथमपि साफल्यमधिगन्तुं प्रभविष्यते संस्कृतं विना । अनुसन्धित्सूनां कृते संस्कृतमेवाशरणशरणम् । प्राच्यार्वाच्यशोधकर्तॄणां संस्कृतमेव मातरमिवोपकारकं हितकरञ्चोत्प्रेक्षे । काव्यालङ्कारव्याकरण-दर्शनशास्त्रेषु प्रवेशमन्तरा भाषासाहित्यसम्बद्धा कापि गवेषणा कदापि न सफलेति निश्चयप्रचम् । अतोऽधीति-बोधाचरणप्रचरणैः सस्कृतस्य सार्वत्रिकः सर्वदिक्षु च प्रचारो नितरामावश्यकः ।

सामयिकीं चेमामावश्यकताद्वयीमभिलक्ष्य लिखितमिदं 'चारुचरितामृतं' संजीवनीसंनिभं मृतप्रायजीवनानि संजीवयिष्यति। सरलया च संस्कृतगिरा सम्भृतस्य प्रभूतं प्रचारमपि सन्तनिष्यत्यनवरतमिति संस्कृतप्रचारं समीहमानानां समेषां सचेतसां चेतस्तोषावहं वृत्तम्।

साम्प्रतं हि परिपक्वबुद्धीनां वृद्धानां तु का कथा ये सुकुमारमतयः सत्यासत्यविचारविरहिता दुश्चरित्रभरैः संस्कारैः प्रभाविता बभूवुः। युवका युवतश्च ते श्रमतपोभ्यां हीना देश-धर्म-कर्त्तव्यभक्तिभिः पलायमाना दूरीभूताश्च चारुचरित्रसम्पदः। तेषां स्वान्ते नितान्तमपि नेशभयं न नरेशभयं, न च जनताजनार्दनात् सामाजिकं भयम्। स्वतन्त्रोऽपि युवकवर्ग उच्छृङ्खलो निस्तन्द्रोऽपि सतन्द्र इवाभूत्। अस्मिन् देश-धर्म-कर्त्तव्यविमुखे नास्तिकं मन्यमाने जीवनं प्रत्यपि दुर्मनायमाने जाते युवकवर्गे देशभक्तेः कर्त्तव्यतासृष्टेर्विशिष्टांश्च जीवनङ्कुरानाङ्कुरयितुं चरित्रप्रधानानां कर्त्तव्यपरायणानां धर्मरतानां देशमेव सर्वस्वञ्च मन्यमानानां चारुचरितावलिरेव सक्षमा। तांश्चांकुरान् पल्लवितान् पुष्पितान् फलितांश्च दर्शं-दर्शं स्वर्गतस्य मुनिपुङ्गवस्य दीव्यानन्दस्यात्मा दिव्यानन्दं स्वीयश्रमञ्च कृतार्थं धन्य-धन्यञ्च मंस्यत इत्याशास्यमानो विरमामि।

आचार्यं च गुरुवर्यं श्रद्धावनतः श्रद्दधानः सादरं प्रणमामि।

स्थानम्
६१० उद्यानपाना
नरेला दिल्ली १५-९-१९७१

विदुषां वशंवदः
राजवीरः शास्त्री
व्याकरणाचार्यः एम. ए.

ओ३म्

# चारुचरितामृतम्

[प्रथमो भागः]

## श्रीदण्डी स्वामी गुरुदेवो विरजानन्दः

अभूद् व्याकरणस्य सूर्यो वेदविद्यायाश्च सागरस्स्वसमये श्रीदण्डी स्वामी विरजानन्दः। तत्रभवानेव भविष्यति काले श्रीदयानन्दसरस्वतीस्वामिनो गुरुर्बभूव।

पञ्चापप्रदेशे कर्तृपुरमण्डले बोईनाम्न्या नद्यास्तीरे गंगापुरग्रामे सारस्वतब्राह्मणस्य भारद्वाजगोत्रीयस्य श्रीनारायणदत्तस्य गृहमसौ स्वजन्मनाऽलञ्चकार। पञ्चमे वर्षे भयङ्करेण शीतलारोगेणामुष्य चक्षुषी द्युतिहीने सञ्जाते। अस्मादेव कारणादमुं सूरदासस्वामी प्रज्ञाचक्षुःस्वामीति कथयाञ्चक्रुर्जनाः।

अष्टमे संवत्सरे स्वकीये गृह एवासौ विद्यारम्भं चकार। व्याकरणस्याध्ययनं कुर्वाणस्यैवास्य कियद्भिर्हायनैर्मातापितरौ स्वर्गं गतवन्तौ। उवासासौ सहोदरस्य समीपे परं भ्रातुः कुव्यवहारेण चतुर्दशवर्षदेशीय एवायं लोचनहीनो बालो गृहं विहाय ऋषिकेशमाययौ। गायत्रीमन्त्रेण बालहृदयमस्याधिकृतमिति तत्रर्षिकेशे गंगायाः शीतले जलेऽयं महता तपसा वर्षत्रयपर्यन्तं गायत्रीं जजाप। तत्रैव लघीयसीं पर्णकुटीं निर्मायैष तस्थौ। मन्दिरे क्षेत्रे वा भोजनं लेभेऽसौ। वन्याः प्राणिनः प्रायो निशायामागत्य बभञ्जुरस्योटजम्।

रजन्यामेकस्यामकस्मादाकर्णितममुना— "अभूत्तव यद्भवितव्यं सम्प्रति याहि त्वमित" इति । इमामाकाशवाणीमवगम्य विरजानन्द ऋषिकेशं परित्यज्य कनखलमाजगाम ।

तत्र प्रसिद्धात् संन्यासिनः पूर्णाश्रमस्वामिनस्सकाशादसौ संन्यासदीक्षां जग्राह । दीक्षायामेवास्यामयं "विरजानन्दा"भिधानं दधार । तपसा निष्ठया च विरजानन्दस्य बुद्धिरतितीक्ष्णा संजज्ञे । कनखले पपाठायं सिद्धांतकौमुदीं पश्चादेष काशीं ययौ । तत्रापि स पठितवांत्सहैव पाठयामास महत्या प्रतिभयाऽसौ । तेनास्य द्रुतमेव प्रसिद्धिर्वितेने । ततोऽसौ गयामाससाद । मार्गे तस्करैरयं संत्रासितो बभूव । दैववशाद् गवालियराधीशस्य सेनानीरेकः किञ्चद् दूर एव न्यवात्सीत् । आक्रन्दनममुष्याकर्ण्य करुणार्द्रचेतास्स चमूपतिरेनं जुगोप । तेन देवगिरा श्राविता स्वविपत्तिवार्तां पण्डितात्स्वीयादव-बुध्यासौ सैन्याधिपस्तस्य भक्तो बभूव । निदधौ चातिश्रद्धया कानिचिद् दिनानि निजोपकण्ठेऽमुम् । तस्मात्स्थानादसौ 'सोरों' स्थलमाजगाम । इदं 'शूकरतीर्थ'नाम्ना विख्यातं वर्तते । तीर्थे तस्मिन्नसौ महात्मा अङ्गदरामबुद्धसेनादीनध्यापयामास । तदध्या-पनकारणात् सोरोंनिकटस्थं गढियाघट्टं प्रसिद्धमभूत् । गङ्गाजलेऽत्र-भवन्तं विष्णुस्तोत्रं पठन्तं निशम्य स्वयमलवरनरेशो विनयसिंहः प्रभावितस्सन्नेतं सन्तं बृहतानुरोधेन निजराजधानीं निनाय । विदुषाँ भृशमादरं विधायालवरनरेन्द्रस्तान् निजराजनगरे न्यवासयत् । अलवरेन्द्रस्तस्मात्प्रतिज्ञया होरात्रयं प्रतिदिनं नियमेन पठितुं प्रारेभे । अतिद्रुतं व्याकरणे प्रावीण्यमभीप्सोर्नरेशस्य प्रार्थनया श्रीमान् दण्डीश्वरः 'शब्दबोध'नामकं ग्रन्थं प्रणिनाय । तद्धस्तलिखितं पुस्तकमलवरराजकीयपुस्तकालये सुरक्षितमस्ति । राजा विनयसिंहः प्रकृत्या प्रचण्डोऽपि गुरुदेवविरजानन्दस्योपान्ते निरतिशयविनयेनो-पतस्थे । अलवरनरेशः काँश्चिन्मूर्खानपठितानपि व्यर्थं सम्मानया-

श्चकार । एकदा च प्रतिज्ञां भङ्क्त्वा पठनेऽनध्यायजन्यां त्रुटिं चकारायम् । दण्डीश्वरोऽस्मात् खिन्नस्सन्त्सत्वरं सोरों-पदमेव प्राप । अलवरेऽयं त्रिचतुराणि वर्षाण्यनैषीत् । शूकरतीर्थे बहुरुग्णो बभूव स्वामी । तदनु भरतपुरमासदत् । तत्रापि राज्ञाऽतितरां सम्मानितोऽयम् । कियद्भिर्मासैः श्रीमान् मथुरामागमत् ।

मथुरायां पाठशालामुद्घाटयामास दण्डी । सेदानीमपि विश्रान्तघट्टवर्त्मनि भग्नदशायां विद्यते शिक्षणशाला । दण्डिनः पाठशालायामादौ कौमुदीशेखरचन्द्रिकादिग्रन्था अपाठ्यन्त । परं मथुरायामेका शास्त्रार्थचर्चा प्राचलत् । तस्यां काशीवास्तव्यैः पण्डितैः प्रलोभेनासत्या व्यवस्थाऽदीयतेति विलोक्य विमृश्य च दण्डीश्वरः समग्राननार्षग्रन्थानत्याक्षीत् । आर्षग्रन्थानां "पाणिनीयाष्टकस्य" "महाभाष्यस्य" च पाठमसौ स्वामी प्रारभत । प्रत्यहमयं स्वशिष्यवर्याद् वनमालिनामकात् पाणिनीयाष्टाध्यायीपाठं पातञ्जलमहाभाष्यञ्चाश्रौषीत् । रात्रौ चासौ दण्डी तस्य मननं विधाय तत् स्मृतिस्थमकार्षीत् । इत्थमेष सम्पूर्णमष्टाध्यायीसहितं महाभाष्यं कण्ठाभरणं व्यदधात् । तदेव विद्यार्थिवृन्दमध्यापयत् । ततः प्रभृत्येवात्रभवतः स्वामिन आर्षग्रन्थेषु नितान्तं स्नेहः श्रद्धा चाजनिष्ट । आर्षेषु चानार्षेषु च ग्रन्थेषु पर्यालोचनमनिशमकार्षीदृषिः । असौ गुरुदेव आदित्यरामगिरिं साधुवरं गङ्गारामशास्त्रिप्रमुखाननेकान् विदुषश्चार्षग्रन्थपक्षपातिनो व्यधत्त । बहूननार्षग्रन्थांश्च यमुनाम्बुप्रवाहे प्रावाहयत् ।

आसीदतीव समुत्सुकता श्रीदण्डिनो हृदये आर्षसाहित्यप्रतिष्ठासम्पादने । सम्राज्ञ्या विक्टोरियादेव्या अभयघोषणां कर्त्तुं तत्प्रतिनिधिर्भूत्वा लार्डकैनिंगमहोदय १८५९ एकोनषष्टयुत्तराष्टादशशततम ईशवीयाब्दे नवाम्बरमासे भारतमाजगाम । स्रुघ्ननगरे [आगरानगरे] बभूव तदा राजसभा । तदानीं दण्डीशो जयपुरनरेशं महाराजं

रामसिंहमुत्तमं योग्यञ्च राजानं विज्ञाय तं साक्षात्कर्त्तुं स्रुघ्नपुरमियाय। तत्पुरतः श्रीमान् दण्डी स्वामी सार्वभौमसभायाः प्रस्तावं निधायातिप्रभावशालिभाषणमपि ददौ। राजा रामसिंहः पूर्वं तु स्वीचकार पश्चाद् विसस्मार किल !!

१९१७ सप्तदशाधिकैकोनविंशतिशतमिते वैक्रमसंवत्सरे श्रीमद्दयानन्दनामा भव्य एकः संन्यासी रंगजीवमन्दिरमुपेत्य तस्थौ। तदनु सोऽपि दण्डीशस्य पाठशालायां पठितुमुपचक्रमे। स्वामिनो दयानन्दस्य मेधया प्रज्ञया विरजानन्दगुरुदेवो दृढमावर्जितोऽभवत्। वादविवादनैपुण्यनिमित्ताद् दण्डीश्वरः स्वामिदयानन्दं 'कालजिह्व' 'ध्रुवकाष्ठ'ञ्च जगाद। नूतनेऽस्मिन् विद्यार्थिनि दण्डिनः प्रभूता आशा अभूवन्। महर्षिदयानन्दस्स्वजीवने गुरुदेवस्यामूराशाः पूर्णा व्यधात्।

दण्डीश्वरो मूर्तिपूजामप्यखण्डयत्। शास्त्रार्थाननेकानप्ययमकृत। मुरसाने रंगाचार्यस्य गुरुमनन्ताचार्यं मासत्रयपर्यन्तं वादसमरं कृत्वा पराजयत। दण्डिनो भोजनप्रबन्धोऽप्यद्भुत एवासीत्। कदाचित् फलानि, कदाचिदन्नं, कदाचिच्च दुग्धं द्राक्षाञ्चाश्नादसौ। जातु सैन्धवं शुण्ठीञ्चादत्केवलम्। बुद्धिवृद्धयेऽत्रभवाञ्ज्योतिष्मतीमसेवत।

लोचनहीनोऽपि दण्डीशः प्रायः सकलं व्यवहारं चक्षुष्मानिवाकरोत्। छात्राणां विस्मृतं पाठमसौ पुस्तकेभ्योऽन्विष्यादर्शयत्। सोपानारोहणं तस्मादवरोहणम्, नदीलङ्घनम्, जलावतारगमनमित्यादिनिखिलकार्यं यथायथमकार्षीद्दृषिः।

एकदा ब्रह्मर्षिः सैन्धवभ्रमेण संखियाख्यं विषमभक्षयत्। परं यौगिकक्रियया स्वस्थोऽभवत्। दण्डिमण्डनेऽवर्ततालौकिकी प्रतिभापि। एकः प्रज्ञाचक्षुः शतावधानः कविर्गुट्टूलालो मथुरामायात्। गुट्टूलालः श्लोकमेकं विरच्य दण्डिनमश्रावयत्। अब्रवीद् दण्डी—

"इदृशाञ्श्लोकान् ममच्छात्रा रचयन्तीति ।"

भरतपुरराज्यपण्डितः श्रीमणिरामः श्लोकस्यैकस्यानेकानर्थानकुरुत । पारस्यभाषायामपि व्यदधादेकमर्थम् । श्लोकस्य पारसीकभाषार्थेऽपि बहून् दोषानदर्शयद् दण्डी । दिल्लीनिवासी धूर्तो हरिश्चन्द्रः सकृद्दण्डिनः पाठशालामुपेत्य प्रच्छन्नं निषण्णश्छात्रेषु । अल्पां शङ्कां कुर्वन्तमेवामुम्— 'नायं छात्रः किन्तु विद्यते धूर्तो हरिश्चन्द्रः" इत्युवाच पुरुषपरीक्षापण्डितो दण्डिमण्डलमण्डनः ।

१९२५ पञ्चविंशत्यधिकैकोनविंशतिशततमे विक्रमसंवत्सरे मास आश्विने कृष्णात्रयोदस्यां सोमवासरे पाञ्चभौतिकं देहं जहौ श्रीदण्डी स्वामी विरजानन्दगुरुदेवः । अमुष्य मरणोदन्तं निशम्य तदीयपरमशिष्यो महर्षिर्दयानन्दस्वामी सहसा—"अद्य व्याकरणस्य प्रभाकरोऽस्तं गत" इत्युदाजहार ।



# महर्षिदयानन्दसरस्वती

महर्षिदयानन्दसरस्वतीस्वामी बभूवैक ईदृशो महापुरुषो यस्य आन्दोलनेन भारतवर्षे धार्मिकस्य सामाजिकस्य राजनीतिचक्रस्य च क्रान्तेरुपक्रमोऽक्रियत खलु !! महर्षेर्दयानन्दस्वामिनो जन्म भारतस्य प्रतीच्यां दिशि गुर्जरप्रान्ते सौराष्ट्रदेशे मोरवीराज्यवर्त्तिनि टङ्काराग्रामे औदीच्यब्राह्मणस्य श्रीमतः कृष्णस्य त्रिवेदिनो गृहे संजज्ञे। आसीदसौ श्रीकृष्णो महान् भूमिभुक्। राज्यनियुक्तोऽयमधिकारी कृषकेभ्यः करं समग्रहीत्। 'मूलशङ्कर' इति स्वामिनो दयानन्दस्याभवज्जनिनाम। श्रील: कृष्णत्रिवेदी शिवस्य महानुपासकोऽविद्यत। जप उपवासादौ च व्रतेऽवर्तत सुतरामयं श्रद्धालुः।

गुर्जरकाठियावाडप्रदेशे माघकृष्णचतुर्दश्यां तिथौ महाशिवरात्रीदिवसे पिता चतुर्दशवर्षदेश्यं बालकं मूलशङ्करं व्रतं पालयितुमादिदेश। मूलशङ्करो बहुश्रद्धया व्रतं रात्रिजागरणञ्च चकार। सर्वं उपासकास्तु सुषुपुः परं मूलोऽजागरेव। मन्दिरे शिवलिंगे निवेदिताया भोगसामग्र्या मिष्टान्नावल्या उपरि मूषकलीलां भृशं ददर्श बालः। बालस्य मूलस्य हृदये विचार उत्पन्नः—"किमयमेवास्ति महादेवः? यो दैत्यान्संहरति स स्वदेहादुन्दुरानपि निस्सारयितुं न पारयति।" नानासंकल्पविकल्पप्रादुर्भावानन्तरं बालको जनकं प्रबोध्याप्राक्षीत्। पिताऽभाषत—"सत्यो महादेवस्तु कैलासशिखरे वसति। इयं तु मूर्तिरस्ति तस्य।" तत आरभ्यैव श्रीमूलशङ्करस्य मानसे वास्तविकस्य शिवस्यान्वेषणस्योत्सुकता समाविष्टाऽभवत्। मूर्तिपूजायाश्चित्तं विरक्तमजायत। पितुरुत्तरेण न समजनि तस्य समाधानम्। तदात्वे तु भवनमुपगम्य मातुराग्रहेणाशनं पानञ्च विधायायं सुष्वाप।

किंचित्कालानन्तरं गृहे मृत्युद्वयं समजायत। एकं भगिन्या मरणमन्यत् पितृव्यस्य चाभूत्। मूलस्य मनसि मरणविषयकाः विचारा उदपद्यन्त। विचारमग्नतायामस्यां बालकस्य नयनाभ्यां नागलदश्रुजलबिन्दुवृन्दम्। तस्य मनो गृहजालान्नितरामुद्विग्नं संजातम्। एतदालोक्य मूलशङ्कर आसन्नविंशवर्षवयसि विहाय गृहं प्रचचाल वन्यवर्त्मना।

गृहे गवेषणाऽभून्मूलस्य। सम्प्रहितास्समन्ततस्सैनिकाः। अन्ततोऽयमगृह्यत साधुवेषधारी सिद्धपुरसाधुमेले। अतिशयमशपत्सुतं तं जनकः। व्यहरणादस्य स काषायवासांसि सद्यः। उपरक्षणे कठोरे न्यधीयतायं पित्रा पटकुटीरे प्रहरिणाम्। परमेष विरक्तो नवयुवको जलपात्रीमादाय शौचमिषेण यामिन्यास्तृतीये प्रहरे पटकुटीरान्निर्जगाम। पुनर्बहुलं मृग्यमाणोऽप्ययं नालभ्यत यामिकैः। शिवस्यान्वेषणे तरुणो मूलशङ्करः स्थले स्थले योगिनो व्यचिनोत्। असेवतानेकान् विदुषः संन्यासिनः। एकस्माद् दाक्षिणात्यात्संन्यासिनो दीक्षां संन्यासस्यासावगृह्णात्। गुरुणा तेन श्रीपूर्णानन्दस्वामिनाऽयं दयानन्दोऽभ्यधीयत। नानायोगिभ्यो योगाभ्यासक्रियामशिक्षत दयानन्दः। सौराष्ट्रदेशान्नर्मदातीरं, रेवातटादर्बुदगिरिं, तत उत्तरभारतराजमानपर्वतराजप्रान्तमागच्छत्स्वामी। हिमालयशैलारण्येषु सकृद् भल्लूकाक्रमणमस्योपरि समवर्तत। सोऽमुष्य यतेर्यष्टिकामवलोक्य पलायत। विपिनेषु विपुलां विपत्परम्परामप्ययं विभुनिरतस्समवापत्। अलखनन्दानदीमुत्तरतोऽस्यास्या हिमखण्डैराहतौ चरणौ शोणितशोणशोभौ समवर्तिषाताम्। ऐषीदेष तपस्वी तत्रैव तपसा स्वदेहं पातयेयमिति। पुनर्हृदये ज्योतिः प्रज्वलितमेतस्य धीरस्य। संसारस्योपकारः करणीयोऽतः पुष्कला विद्याऽधिगन्तव्या मयेति। ततो न्यवर्तत धीमान्। मथुरायां श्रीदण्डिविरजानन्दगुरुदेवस्य पाठशालायामयं वेदाङ्गसहितान् वेदाध्यगीष्ट। तत्रैव स्वामी दयानन्दो दण्डीश्वरस्यादेशेन निजाननार्षग्रन्थान् यमुनायामवाहयत्।

आर्षग्रन्थानाशिश्रियच्चायम् । विद्याध्ययनानन्तरमन्तेवासिवरो लवङ्गपूर्णपात्रं गुरुदक्षिणायां प्रदाय गुरुराजस्याशीराशिं शिरसि गृहीत्वा चैवमादेशमग्रहीत्—"प्रियवत्स ! विनाशयाविद्यां भारतीय-मनुजानाम् । खण्डयाखण्डपाखण्डमण्डलम् । समुद्धरतरां वैदिकधर्म-ञ्चामलम् । गच्छ, कुरु दिग्विजयमिति ।"

वन्दनीयगुरुदेवस्याज्ञां मालामिव मस्तके धृत्वा शिष्यरत्नं दयानन्दो निरियाय दिग्विजयाय । प्रथमं कुम्भमहामेले हरद्वारमासाद्य पाखण्ड-खण्डनीम् ओमङ्किताां पताकां निखाय गङ्गाङ्के प्रबलं वैदिकधर्म-प्रचारं चकार साधुचक्रवर्ती व्रतिवीरो धीरधौरेयः । आसीत्तदानीं मुनीन्द्रो दयानन्द एकोनचत्वारिंशद्वर्षदेशीयः । तत्रायमनेक-प्रचण्डपाखण्डान्सलीलं सम्प्रदायलीलाश्चाखण्डयत् पण्डितमण्डल-मण्डनः । अमुष्मिन्नेव समये व्रतं विधाय कौपीनं विना सर्वस्वम-जहादयं दयानन्दयोगी । घोरायां तपश्चर्यायां न्यरमत तपोधनो धन्यमूर्द्धन्यः । तीव्र आतपोऽसह्यं शैत्यञ्चोभयं तुल्यमविद्यत ब्रह्म-विद्यार्थिनः । तपसि सिद्धे सति कौपीनधारी आदित्यब्रह्मचारी ब्रह्मा-नन्दविहारी जगदुपकारी वेदधर्मप्रचारेऽनवरतमलीयत दयालु-र्दयानन्दः ।

एकदा बदायूँमण्डलाधीशः स्वामिनमन्वयुङ्क्त—"भवन्तं कथं न बाधते शीतं स्वामिन् !" । प्रत्यभाषत मधुरभाषी— "अपि भवन्मुखं पीडयति शैत्यम् ? यथा श्रीमतामाननस्याभ्यासोऽस्ति तथैवास्मद्वपुषस्सहिष्णुता जायते ।" एकस्मिन् काले पौषमासीयशैत्ये योगीन्द्रो यौगिकप्राणायामबलेन शरीरात्स्वेदं निस्सार्यादर्शयत् । अभूदयं सकलो ब्रह्मचर्यप्रतापः खलु !!

महर्षिः काशीप्रमुखेषु स्थानेषु शास्त्रार्थसङ्गरं कृत्वा प्रखर-विद्याबलेन धुरन्धरपण्डितानपि परास्थत्सदा । मौलवीयाः पादरिबुधा अपि वादाहवेऽबिभयुरस्मात् । अभून्निर्भयो यतिसिंहः । आसीदियती

सिद्धिरहिंसाया यद्—"एकदाऽत्रभवान् भागीरथीजलेऽलेटयत्, समीप एव मकरोऽतरत्।" पृष्टोऽसावाचष्ट— "किमपि भयं न वर्तते, यदा वयमेतं किंचिदपि न वदेम तदाऽयं कथमस्मान् किमपि वदेत्तुदेद्वा।"

आसीदियानयं दयालुर्यदनूपनगरे केनापि श्रीमते ताम्बूलवीटिकायां विषमदीयत। गरलं तु (न्योलो) नकुलक्रिययाऽमुना निरसार्यत। परन्तु पुरभागरक्षको विषदातारं नरं प्रगृह्य स्वामिनस्सम्मुखमानयत्। अवादीद् दयायामानन्दनो दयानन्दः—"विमुञ्चामुम्, नाहमायामिह कमपि कारागारे निक्षेप्तुं प्रत्युत मोचयितुमायं संसारं बन्धनालयात्।" इत्थं हलाहलदायिनमपि जनममोचयन्मुक्तात्माऽयम्। दृढनिष्ठाऽभवदियती सत्ये यत्खण्डनं मण्डनञ्चापि तीव्रमभूद् व्याख्याने। जनताऽगादीत्—"स्वामिन्! इह मण्डलाधीश आयाति न क्रियतामतः श्रीमता मतिमताऽतिमात्रं खण्डनम्।" व्याहार्षीन्महर्षिः—कामं प्रयान्तु प्राणाः परं सत्यं नैव त्यजेयम्।"

कर्णवासे विरोलीवास्तव्यो विराट् कर्णसिंहः स्वामिसिंहं रासलीलायामामन्त्रयामास। यतिवर्यो रासलीलां नितान्तं निनिन्द जगाद चेत्थम्—"एते स्वपूजनीयानां पुरुषाणां वेषं विरचयन्ति नर्तयन्ति च तान् संसारस्य सम्मुखे। इमे निजजनन्याः स्वपुत्रीणाञ्चाकल्पं कल्पयित्वा चेदभिनयं कारयेयुस्तदा तु विजानीयुः खलु कीदृशी लज्जा संजायेतेति।"

एतावदाकर्ण्य ठाकुरकर्णसिंहः कृपाणमाकृष्य कोषान्महर्षिमाक्रमीत्। ऋषिपुङ्गवस्तु निर्भयस्सन्निर्स्त्रिशमस्य हस्तादाच्छिनत्। अत्रोटयच्चामुमवलम्ब्य क्षितौ। लज्जिततरश्चायं निर्ययौ तदा। परं निशायामसौ प्रजिघाय कांश्चिद् धृतायुधान् योधान् निहन्तुं स्वामिसिंहम्। अमी स्वामिकेसरिणो हुङ्कारं निशम्यैव विमुखाः पलायाञ्चक्रिरे।

काशी भारतवर्षे विद्यायाः केन्द्रस्थलं मन्यते । हिन्दूनां विलसति बृहत्तरं तीर्थं वाराणसी । ऋषिर्दयानन्दो जित्वरीममूं विजेतुं निश्चिकाय । काशीनरेशस्य साभापत्ये बृहत्तमायां परिषदि शास्त्रार्थ-समरे पण्डितप्रवरानखिलान् विजिग्ये वाग्मिवरेण्यो दयानन्दः । आसीन्महाँस्तपस्वी स्वामीश्वरः । मिर्जापुरे पदमार्गेऽतिष्ठदेकः प्रबलोऽनड्वान् । आदित्यब्रह्मचारिणो भव्यां मूर्तिं निरीक्ष्यायं महोक्षः कान्दिशीको दिशः शिश्रिये । चांदापुरमहामेले नानामत-प्रमुखनेतारः समेता बभूवुः । तत्रापि ब्रह्मर्षिणा दयानन्देन प्रतिपादितस्य वैदिकमतस्यैव विजयोऽजनि ।

व्यराजततरामाजन्मब्रह्मचारी स्वामीन्द्रः । अनुपमं भवति बलं ब्रह्मचर्यस्य । जालन्धरीयश्चमूपतिः श्रीविक्रमसिंह एकदा तुरङ्गमयुगलयुक्तं पुष्परथमारुह्य भ्रमणाय निरगात् । प्रस्थानसमये स्यन्दनस्य चक्रं व्रतिचक्रवर्ती पृष्ठतः पर्यग्रहीत् । कशया ताड्यमानावपि घोटकौ पदमेकमपि चलितुं नाशक्नुतामिति सेनापतिः पश्चादैक्षत यदा तदा स्वामिदयानन्दं पाणिना रथाङ्गं गृहीतवन्तमद्राक्षीदयम् । व्यज्ञायतामुनाऽतः स्वामिराजस्य ब्रह्मचर्यबलम् ।

महर्षिर्मातृजातिमतिशयमाद्रियत । सकृन्मार्गे मन्दिरस्यैकस्योपकण्ठे कन्यां निभाल्य भगवानादरेण मस्तकमानमयत् । पृष्टोऽयमाचष्ट "नाहं मन्दिराय शिरोऽनमयं परं सम्मुखागताभ्यो मातृरूपाभ्यः कन्याभ्यो मम शीर्षं प्रणतमस्ति । इमा निखिलजगज्जनन्यो जगदम्बास्सन्ति सर्वपूज्याः ।"

अभूदिच्छा हार्दिकी यतिनृपस्य—"भारतीयराज्यानां राज्ञामवश्यं स्यात्सुधारः । तेषु शिक्षाया आचारस्य च भवेदुन्नतिरिति ।" शाहपुराधीशस्तु यतिक्षितिपतेर्दयानन्दाद् दीर्घकालमध्यैत । मेवाड-महीमहेन्द्रस्सज्जनसिंहनरेन्द्रोऽपि द्विजेन्द्रादस्मादध्यगीष्ट शास्त्राणि । योधपुराधीशमेकदा वेश्यायाः शिविकायां स्वस्कन्धं लगयन्तमवलोक्य

निर्भयस्सन्निरभर्त्सयद् यतीन्द्रो यद्—"राजानः केसरिणस्सन्तोऽपि सारमेयीमनुधावन्ति ननु कथम् ?" अस्मात्कारणात्सन्तप्ता पण्याङ्गना वैरनिर्यातनमनीषया महर्षेः पाचकं प्रलोभ्य भोजने विषमदापयद् येनासौ जनहितैषी महापुरुषः पञ्चत्वं प्राप।

अविद्यतात्यन्तं पक्षपाती स्वराज्यस्य स्वदेशीयवस्तूनां स्वमातृभाषायाश्चर्षिदयानन्दः। अत एवासौ स्वमुख्यग्रन्थरत्नं सत्यार्थप्रकाशं संस्कारविधिं वेदानां भाष्याण्यपि हिन्द्यामार्यभाषायां प्राणैषीत्। स्वयं स्वदेशीयवासांसि पर्यधात्। प्रायतततरां स्वराज्योदयाय दयामयो दयानन्दयतिः।

ऋषिर्दयानन्दो यथा मूर्तिपूजायाः प्रबलो विरोधी बभूव तथाऽयं मरणोत्तरं मनुष्यमूर्तिस्थापनमपि निन्द्यं बुबुधे। कविना श्रीश्यामलदासेनानुयुक्तो यतिर्बभाषे—"नावश्यकता जागर्ति मदीयमूर्त्तेः स्मारकनिर्माणस्य ममास्थीनि भस्मचयञ्च कस्मिन्नपि केदारे क्षिपतु भवान्" इति।

गोरक्षणाय महान्तं यत्नमकरोद् दयानन्ददेवः। कतिपयलक्षहस्ताक्षराणि कारयित्वा गोहत्यानिवारणसूचकं प्रार्थनापत्रमप्रेषयद् राज्यपालपतिपार्श्वे। गोकरुणानिधिनामकमपूर्वंपुस्तकं व्यरचयच्चायम्। येन महर्षिदयानन्दस्य हृदये पशुजातिसम्बन्धिनी निरतिशया दयाऽऽसीदिति विज्ञायते।

१९४० चत्वारिंशदुत्तरैकोनविंशतिशतमिते वैक्रमवत्सरे १८८३ ख्रिस्ताब्दे अकटाम्बरमासान्तदिवसे ३१ एकत्रिंशत्तारिकायां दीपमालिकायां ब्रह्मर्षिदयानन्दस्य देहावसानमभवद् भिनायनामकभवनेऽजमेरनगरे। ततः किञ्चित्कालपूर्वमेवाकथयद् यतिराजः "अधुनाऽस्माकमन्तिमसमयोऽस्ति। त्यज्यतामखिल उपचार इति।" निशायामेकादशवादने श्वासस्य वेगोऽवर्द्धत। मलत्यागाभिलाषः संजातः। तदानीमपि नैजं निखिलं कार्यं स्वस्थ इवाकार्षीन्महर्षिः।

रजनी शान्त्याऽतिक्रान्ता। अनेक आर्यजना उपस्थिता आसन्। ऋषिः सकलान्त्सान्त्वयामास। प्रातः षड्वादने भवनद्वाराणि सर्वाणि कारितान्यपावृतानि। दीपमालिकारात्रिरतीता प्रतिपदाविरासीत्। भगवानन्तकाले परमेश्वरस्तुतिपरकवेदमन्त्रानपाठीत्। संस्कृतवाचि विभुवरशङ्करगुणकीर्त्तनमकृत। सहर्षं गायत्रीपाठञ्च कृत्वा समाधिस्थो भूत्वाऽथ लोचने समुन्मील्याभाषत प्रभुरतः—

"प्रभो! इयमेव तवेच्छास्ति। तव कामना पूर्णा भवतु। अहो! कीदृशीं मनोरमां लीलामकरोः।" इत्यभिधाय विनश्वरं शरीरमुत्सृज्य संसृतेरितः प्रस्थितवान् परोपकारी महात्मा।

पञ्चापप्रान्ते प्रख्यातो विज्ञानशास्त्री श्री पं० गुरुदत्तः एम० ए० इत्युपपदभागपि तत्रोपस्थित आसीत्। इदमन्तिमं दृश्यं दृष्ट्वा प्रभावितोऽभूदसौ। दृढनास्तिकोऽपि श्रीमान् दृढ आस्तिकोऽभवत्। समजनि चानन्यभक्तो महामुनेः।

ऋषिवरो दयानन्द आर्यसमाजनाम्नीं संस्थां दृढतमदशनियमाधारां निर्माय निजोद्देश्यपरिपूरणाय सुसंचालितामतनोत्। यस्याः स्थापना मोहमयीमहापुर्यां १९३२ द्वात्रिंशदधिकैकोनविंशतितमे वैक्रमे संवत्सरे चैत्रशुक्लपञ्चम्यामक्रियत। वेदप्रचारद्वारा मानवसमाजे सत्यसनातनवैदिकधर्मस्य तदनुकूलशास्त्राणाञ्च शिक्षणप्रसारणमेवामुष्य महात्मनः प्रधानमुद्देश्यं विलसतितरां खलु!!



# मुनिवरः पं० श्रीगुरुदत्तो विद्यार्थी

[एम० ए० पदविभूषितः]

बभूव नास्तिकशिरोमणिः पाश्चात्यविज्ञानचमत्कारचाकचक्येन नवयुवकोऽयम् । परमास्तिकस्य परमात्मभक्तप्रवरस्य वेदविदां-वरस्य यतीश्वरदयानन्दस्य देहावसानकालिकं प्रभावजनकं दृश्यं संदृश्यासौ स्वीयान् पाश्चात्यान् गुरून् परित्यज्य दयानन्ददेवस्य नितान्तमास्तिकप्रवरः संजज्ञे शिष्यधुरन्धरः ।

श्रीमतः पण्डितस्य गुरुदत्तस्य विद्यार्थिन उद्भव १८६४ चतुः-षष्ट्यधिकाष्टादशशततमे ख्रिस्ताब्दे अप्रैलमासस्य २६ षड्विंशति-तारिकायां पञ्चनदीयमुलतानमण्डले समजनिष्ट । तस्य पिता विक्रमशालिहृदयोऽपि पारस्यभाषायां परमविद्वानासीत् । श्रीगुरुदत्तो बाल्यकालत एव विलक्षणबुद्धिसम्पन्नोऽभवत् । सिंहसंहननोऽद्भुत-स्मरणशक्तिश्चाभूदयम् । पाठशालायाः पाठं सकृदुपश्रृण्वत एवा-मुष्यैष कण्ठस्थोऽवर्तिष्ट । पञ्चवार्षिकस्यास्य शिक्षणमारम्यत गृह एव किल ।

जनकः स्वयमेनं बालमपाठयत् । अतितीव्राऽमुष्यशेमुषी गणितविषये । बृहतीनां संख्यानां योगं गुणनं शेषणं भागञ्चायं कागलं सीसकलेखनीञ्चान्तरेणैव स्मृतिबलेनाकरोत् । अनया विचित्रशक्त्या पश्चादसौ शतावधानसम्पन्नो व्यधीयत । प्रारम्भिक-शिक्षानन्तरं जनक एनमाङ्ग्लवाणीं शिक्षितुमुपाक्रमत । अस्यामपि नितरामयं निपुणोऽविद्यत । अष्टवार्षिको बालक एष शिक्षालये प्रवेशितः ।

स्वस्या विलक्षणायाः प्रज्ञायाः स्मृत्या धारणायाश्च बलेनायं स्वसहपाठीभ्यस्समधिकमग्रतः प्रागमत् । पारस्यभाषया बृहत्तराणि पुस्तकानि निजेऽल्पीयसि वयस्येव कण्ठस्थानि कृतान्यभूवन्नमुना ।

मुधा समयमगमयित्वाऽयं प्रायः परेशविषये व्यचिन्तयत्। विश्व-विख्यातो वैज्ञानिको न्यूटन इवैष गुरुदत्तो भूयांसं समयमाकाशाभि-मुखविलोकन एवायापयत्।

कविताविरचनेऽपि प्रवृत्तिरासीदस्य। प्रलम्बमेकमुर्दुलेखमेष काव्ये पर्यणमयत्। स्वाध्यायस्यायमद्वितीयो व्यसनी समवर्तत। मैट्रीकपरीक्षोत्तरणात्प्रागेव श्रीमान्—"मसनवी मौलाना रूम" [पोकाककृतम्], "इण्डिया इन ग्रीस," "बाइबल इन इण्डिया"; "आईन मज़हवीह नूद" इत्यादीनि विविधानि पुस्तकानि वाचयाञ्च-कार। तदा प्रभृत्येव तत्रभवान् प्राणायामस्याप्यभ्यासं विदधे। प्राणायामस्योत्तममभ्यासं विधाय धीमानयं काश्चनहोरा यावत् समाधौ तस्थौ।

लवपुरीयांग्लमहाविद्यालये लेभेऽसावुच्चशिक्षाम्। एफ० ए० वर्ग एवायम्– एम० ए० वर्गीयविद्यार्थीव बभौ प्रतिभाशाली। दर्शनग्रन्थेषु महती गतिरेतस्य। आंग्लभाषायामतिशयविद्वानयम्। गणिते विज्ञानेऽप्येष सुदक्षः। कदाप्यसौ परीक्षायै पाठ्यपुस्तकानि नापाठीन्निजभवने। तथापि परीक्षायां सर्वप्रथम एवास्थादसौ। विज्ञानाद्यनुशीलनेनैतस्य विचारा नास्तिकतोन्मुखास्समभवन्।

यदा महर्षेर्दयानन्दस्य विषमस्यासाध्यस्य रोगस्य समाचारः प्राप्यत तदा सुहृदां प्रेरणया भवानपि देहावसानसमये समासददज-मेरनगरम्। एष ऋषेर्दयानन्दस्य देहस्यातिकठिनायां दुःखदायां दशायामपि प्रशान्तां प्रसन्नाञ्चाकृतिं समालोक्याश्चर्यसागरे न्यमाङ्-क्षीत्। संयमिपञ्चाननस्याननात्कदाप्यार्त्तस्वरमपि नाकर्णयदिति पण्डितस्य गुरुदत्तस्य हृदयाकाशे परमेश्वरास्तित्वद्युतिरतितराम-द्योतत। ईशसत्तायास्साक्षादनुभवस्समजनि तदीयदिव्यनयने। तदारभ्यैव वैज्ञानिकधुरीणोऽयं महर्षेर्दयानन्ददेवस्यानन्यभक्तोऽभवत्।

ऋषिराजसत्सङ्गेन प्रभावितोऽसौ स्वकीयं शेषं जीवनं समयो-जयत्सेवायामार्यसमाजस्य। सोऽयं स्वयं संस्कृताध्ययनं प्रारभत। पाणिनीयाष्टाध्यायीं सार्थां सोदाहरणामेष सस्मार। देवगिरि व्याख्यानाभ्यासं चकार। वेदानां मन्त्राणां वैज्ञानिकीं गूढां व्याख्यां प्रकाशयाञ्चक्रे कुशाग्रबुद्धिरयम्। प्राचीनविद्याधिगमाय महान्तमेकं महाविद्यालयमुद्घाटयितुमुद्युयुजेतरामयम्। यत्फलस्वरूपो विरराज भूतचरो लवपुरे श्रीदयानन्दाङ्गलवैदिककालेजनामा महाविद्यालयः। यश्च पाकिस्तानकृपया प्रलयं प्रयातः। एतदर्थमथसंग्रहणे श्रीपण्डितो गुरुदत्तविद्यार्थी रात्रिं दिनञ्च समीचकार। असौ शिक्षणालयादस्मात् प्राचीनार्षग्रन्थानां विपश्चित आर्यधर्मप्रचारकप्रवरान्नरानुत्पादयितु-मतितरामैषीत्। न्यदधादयं धनसंग्रहसमयेऽत्युज्ज्वलरूपेणैतदेव लक्ष्यं जनतासमक्षम्। परमनन्तरमेतस्य सञ्चालकानां ध्येये परिवर्तिते सति तस्योद्देश्यं केवलं कालेजपर्यन्तमेवातिष्ठत्।

पण्डितराज आसीदतिविनोदशीलः। एकदा एम० ए० परीक्षोत्तीर्णः कश्चिदुच्चपदाधिकारी शासनकर्मचारी स्वेनैकेन मित्रेण साकमागत्यान्वयुङ्क्त पण्डितप्रवरमेनम्– "सुश्रुते तु मांसाशनविधानं विद्यते। तत्कथं भवेदनुकूलं भवदीयसिद्धान्तस्येति।" प्रत्यवोचद् वाग्मि-वर्यः—'आम्! विधानं तु विहितमस्ति। परन्तु यदि श्रीमान् सुश्रुतं मन्यते तर्हि तस्मिन्त्सर्वेभ्यः श्रेष्ठं मांसं मानवस्य प्रत्यपादि, मानवे-ष्वपि एम०ए० परीक्षां समुत्तीर्णस्य चेत् किमु खलु वक्तव्यं तदेति।" इदं वचोनिशम्यैव स एम० ए० पदवीधरस्तूष्णीमतिष्ठत्।

तत्रभवान् वैदिकधर्मप्रचारहेतवे पत्रमेकमपि निरसारयद् यदनन्तरं विरतमभूत्। संस्कृतप्रसारायायमेकां रात्रिपाठशालां समचालयद् यस्यां स्वयमसावपाठयत्। अत्यधिककार्यवशादमुष्य स्वास्थ्यं विकृतं समजनि। आमयश्चायममुं मरणद्वारपर्यन्तमनयत्। [१८९० ई० सन् मार्च १९] नवत्यधिकाष्टादशशततम ईशवीयाब्दे

मार्चमासस्यैकोनविंशे दिनाङ्के विज्ञानिवर्यो मुनिवरः श्रीगुरुदत्तः पञ्चत्वं प्रत्यपद्यत ।

इत्थमकस्माद् दिवङ्गते श्रीपण्डिते गुरुदत्तेऽदसीयवियोगस्यासह्यवेदनया व्याकुलोऽभूदतितरां श्रीमहात्मा मुन्शीराममहोदयः । एष स्वाध्यायविषये श्रीगुरुदत्तविद्यार्थिनमात्मनो मार्गदर्शकममंस्त । सिद्धान्तपालने तु मनोषिगुरुरवर्ततातीवाग्रही । वादसमरेऽसौ मेधावो भोष्मपितामह एवाभाष्यत श्रोतृजनैः ।

स्वाध्यायस्य सम्बन्धेऽयमभ्यधात् "मयाऽष्टादशकृत्वो महर्षिदयानन्दप्रणीतस्य सत्यार्थप्रकाशस्य पारायणमक्रियत । प्रत्येकस्मिन् प्रसंगे नवां नवामेव वार्तामहमवेदिषम्" इति । अयमृषिवरदयानन्दस्य जीवनं स्वजीवने संक्रामयितुमत्यर्थं प्रायतिष्ट । व्याहार्षीदियं यदहं महर्षिदयानन्दस्य जीवनं लिखामि । अनुयुक्तोऽसावुक्तवान्— "तन्मम हृदयपट्टिकायामालिखामीति" । ऋषिभक्तोऽयं निजभवनखण्डस्य भित्तीः केवलं यतीन्द्रदयानन्दस्य विचित्रैश्चित्रैर्विभूषिता व्यधत्त । मनीषिणाऽमुना स्वल्पजीवनकालेऽप्यतिमात्रं लोकसेवा व्यतन्यत । विज्ञानिगुरुणा प्रणीता उपनिषदां व्याख्या वेदानाञ्च तत्सिद्धान्तानाञ्चाङ्ग्लवाचि लेखा योरोपेऽमेरिकाखण्डेऽपि च क्रांतिमुदपादयन् । प्रत्येकार्यविद्यार्थिना पण्डितप्रवरस्य श्रीगुरुदत्तस्य ब्रह्मविद्यार्थिनो जीवनमनुकरणीयं सर्वथा ।



# धर्मवीरः श्री पं. लेखराम आर्यपथिकः

आर्यसमाजस्य वीरेषु निर्भयेषु च प्रचारकेषु सर्वेभ्यः प्रथम एवासीत् प्राणानां बलिदाता श्रीमान् पण्डितलेखराम आर्यपथिकः। पञ्चनदप्रान्ते जेहलममण्डले सैदपुरग्रामे धर्मवीरोऽयं निजजनुषा पञ्चदशोत्तरैकोनविंशतिशततमविक्रमवत्सरे [१९१५] सौरचैत्राष्टम्यां समलञ्चकार सारस्वतमेकं विप्रकुलम्। एतद्वपुषि क्षात्रतेजसोंऽशोऽपि पैतृकसम्पत्तौ सम्प्राप्तोऽभूत्। श्रीमतः पितामहो महतानारायणसिंहो वीरयोद्धा बभूव। एष शैशवादेव धार्मिकसंस्कारसम्पन्नोऽभवत्। अयमेकादशवर्षदशायां निजपितृव्येण समं व्यतनोदेकादशीव्रतम्।

बाल्यकाले प्रथममयमशिक्षत केवलमुर्दूपारस्यभाषाम्। विचारे स्वतन्त्रोऽभूदेषः। सुतीक्ष्णा चास्य धिषणा। १९३२ द्वात्रिंशदधिकैकोनविंशतिशतमिते वैक्रमाब्दे पौषमासे स स्वपितृव्यस्य श्रीगण्डारामस्य साहाय्येन पौररक्षकनिरीक्षकस्संजज्ञे। समये तस्मिन् प्रायो भक्त्याऽयं गुरुमुखीलिखिताया गीतायाः पाठं विदधे।

एकविंशे वर्षे मातापितरावेतस्य विवाहसम्भारं चक्रतुः। परं वीरो नाङ्गीचकारामुम्। एनस्य वैराग्यभावनाऽमुं धर्मग्रन्थानां स्वाध्यायपथं निनाय। एतस्मिन् धर्मवीरे श्रीमुन्शी अलखधारिणो लेखानां महान् प्रभावो बभूव। तैरेवास्य मानसं महर्षिं दयानन्दं तदीयमार्यसमाजञ्च प्रति समाकृष्टं समजायत। असौ महर्षिग्रन्थान् पठितुमुपचक्रमे। तद्गतेषु विचारेषु हृदि संक्रान्तेषु गाढमयमार्यसमाजस्य सभ्यः सम्बभूव।

१९३६ मिते वैक्रमसंवत्सरे सीमाप्रान्ते पुरुषपुरे (पेशावरे) असावार्यससाजमस्थापयत्। जीवब्रह्मणोरेकताविषयकं संशयं निराकर्तुं श्रीमानार्यपथिक ऋषिदयानन्दं साक्षात्कर्तुं व्यमृशत्।

१८८० तमे ख्रिस्ताब्दे मईमासस्य सप्तदशे दिनाङ्के मासावकाशमादायायं सरलं सम्प्रपेदेऽजमेरम् । तत्रायमृषिसकाशादनेकशङ्कानां समाधानं लेभे । पंचविंशवर्षायुषः पूर्वं विवाहकरणस्यादेशञ्चायं प्राप।

महर्षिसत्सङ्गादनन्तरमेष धर्मप्रचारे तीव्रं मनो ददौ । "धर्मोपदेश"— नामकं पत्रं सञ्चालयामास । मौखिकं व्याख्यानमपि प्रादात् । पेशावरादमुष्यकैङ्कर्यपरिवर्तनं जातम् । १८८४ ख्रिस्ताब्दे सप्तममासस्य २४ चतुर्विंशतितमे दिनाङ्के १९४१ मिते वैक्रमे संवत्सरे पौररक्षकनिरीक्षकसेवां विहायात्मानं धर्मप्रचारकार्याय समर्पयामास धर्मवीरः । एष निरन्तरं समुपातिष्ठत संलग्नो धर्मप्रसारे । यथावसरं पुस्तकान्यलिखत् पत्त्रञ्च प्राकाशयत् । अविरतं प्रचारयात्रायां प्रवर्तमानत्वादयं स्वीयमभिधानमेव "आर्यपथिक" इति न्यदधात् । अमुष्य धार्मिकस्संघर्षः क़ादियानमण्डलवासिना मिरज़ा गुलाम अहमद क़ादियानीनाम्ना महाशयेनातिशयमभूत् । आर्यसमाजाक्षेपकस्य 'बुरहान ए अहमदिया' इति नामकस्य पुस्तकस्य खण्डने पण्डितमण्डनोऽयम्— 'तकज़ीब ए बुरहान ए अहमदिया' इत्याख्यं पुस्तकमलेखीत् । मिरजाभिधो बुधः 'सुर्म ए चश्म आर्या' इत्यभिधां पुस्तिकामरचयत् । तदुत्तरे त्वसौ—'नुस्खे ख़ब्त अहमदिया' इति नाम्नीं पुस्तिकां व्यरचयत् । इत्थं यदा लेखैरमुष्य सन्तोषो न समजनि तदा तु स्वयमयं क़ादियाननगरमुपेत्य मिरज़ामौलवीयमाह्वास्त । परास्तञ्चैतं कृतवान् । मिरज़ागुलामोऽजूघुषत्— "मदन्तिके समायान्तीश्वरस्य दूताः । यमहमिच्छेयं प्रार्थनां कृत्वैकवर्षाभ्यन्तरे तं हन्तुं प्रभवेयमिति ।" परीक्षाकाराय २४००) चतुर्विंशतिशतरूप्याणि वार्षिकं पारितोषिकं दातुमघोषयदयम् । यदाऽऽर्यपथिकेनायं तावन्मात्रं धनं सन्निधातुमभ्यर्थीयत तदा तु मिरजा गुलामो मौनमाकलय्य लज्जया चावाङ्मुखोऽभवत् । अपाक्रियतास्य चमत्काराणां छलच्छिद्रं सद्योऽनवद्यशीलेन धर्मवीरेण लेखरामपण्डितेन ।

असौ वाग्मिवीरः पादरीणां मुसलमानानाञ्च मतानां तीव्रं छिद्रमपावृणोत् । पादरयस्तु तदसहिषत । परं मुसलमानानां समुदायान्मोहम्मदीयकृपाणेन प्राणग्रहणस्य विभीषिकां प्रापदयम् । तथापि कर्मवीरः पण्डितः प्राणानां मोहं विहाय निर्भयतया धर्मप्रचारमकरोदेव । विभीषिकाणां प्रतिवचने प्रावोचदेषः—"संसारस्य सर्वे धर्मा हुतात्मनां रुधिरैः समभिषिक्ता एव पुष्पिताः फलिताश्च सम्पद्यन्ते । अत एवाहमसून् निजान् हस्ते समादाय जगति विचरामीति ।"

अनेके सनातनधर्मावलम्बिन उच्चकुलप्रसूता हिन्दुयुवका यवनानां ख्रिस्तीयानाञ्च कपटप्रपञ्चचक्रे निपत्य धर्मभ्रष्टा बभूवुः । गोपायाञ्चकारासावनेकान् पिपतिषून् युवकान् । एतादृशसमाचारश्रवणसमकालमेव धीरधौरेयोऽयं धर्मरक्षाकृते बद्धकटितटोः झटिति प्रचचाल ।

आसीदसितरां तत्रभवतो महती श्रद्धा "ओ३म्"सच्चिदानन्दकन्दपरब्रह्मणि परमेश्वरे । नासहिष्टैतस्यापमानं मनागप्ययम् । एकदाऽसौ महाशयवरश्रीलालादेवराजस्योद्यानेऽस्थात् । एकस्मिन् क्षुपकुण्डे "ओ३म्" नामालिख्यत । कश्चिद् ब्राह्मणबालकस्तदुपरि पादुकया प्रहृत्य पण्डितवरं कोपयितुं प्रारब्धः । ज्वरदशायामेव श्रीपण्डितस्तं दण्डयितुमजिघृक्षत । अपसृते तस्मिन्नयं रोषारुणः खट्वायां शयानो निरश्वसीद्यावत्तावदेव महात्मा मुन्शीरामः [श्री स्वामी श्रद्धानन्दः] तत्रायासीत् । सद्योऽवादीत्पण्डितस्तम्—"भवदीयमिदं गृहं नार्यगृहमस्ति नाहमिह स्थास्यामि । किमिति सात्रभवान् 'ओ३म्' मण्डितं क्षुपकुण्डमधस्तात् स्थापयति । एतदपमानकारणं श्रीदेवराजमहोदय एवास्तीति ।" महताऽनुनयेन विनयेन चायं वीरः शान्तो व्यधीयतामुना । श्रीमानतीव त्यागी सन्तोषी आदर्शब्रह्मण आसीत् ।

अयं पञ्चापार्यप्रतिनिधिसभायाः केवलं निर्वाहार्थं पञ्चविंशति-रूप्यकाणि २५) मासिकमगृह्णात् । एष षट्त्रिंशद् वर्षायुः पर्यन्तं रुद्रसंज्ञको नैष्ठिकब्रह्मचारी भूत्वा १९५० तमे वैक्रमे वर्षे मरीमण्डल-वर्तिनो 'भन्न'ग्रामस्य कुमार्या लक्ष्मीदेव्याः पाणिमगृह्णीत। स्वपत्नी-मयं स्वयं विद्याभ्यासमकारयत्। ऐषीदेषः—स्वधर्मपत्न्यपि धर्मप्रचारं कुर्यादिति । १९५२ द्विपञ्चाशदधिकैकोनविंशतिशतमिते वैक्रमाब्दे गृहिणी सुतमसूत । 'सुखदेव' इति नामास्य ह्यधीयत । भार्यापुत्रौ धर्मप्रचारकौ स्यातामितिधियाऽयं प्रचारे पत्नीमपि सहैवारक्षत् । यात्रायां कष्टस्यासहनादनयोः सार्द्धैकहायनजातस्य सुतस्य देहान्तो-ऽजायत । पुत्रवियोगोऽप्येनं धर्मप्रचारकार्याद् विचलितं विधातुं नापारयत् ।

असौ महर्षिदयानन्दस्य विशालं प्रामाणिकं जीवनचरित्रं विरचयितुं सुतरां संलग्नोऽभूत्। एष ऋषिजीवनस्यातिमात्रमनुसंधानं व्यतनुत । बृहतानुसंधानेन तज्जीवनचरितममुना सङ्कलितमक्रियत । स्वजीवनकाले तच्चरित्रं लेखितुं न प्राभवदयम् । तदनन्तरं श्री मा० आत्मारामहोदयोऽमृतसरनिवासी सकलां सामग्रीमुर्दूभाषायां संगृह्य महर्षेर्दयानन्दस्य विशालं जीवनचरितं प्राकाशयत् ।

कादियानस्थयवनैरेतस्योपरि कियन्तोऽभियोगाः सञ्चालिताः परं सकला निष्फला जाता खलु !! तस्मात्संकुप्यामुष्यामी प्राण-हरणस्य प्रयत्नमकुर्वन् । १९५९ तमे वैक्रमे संवत्सरे फाल्गुनमासे [१९०२ ई० फरवरीमध्ये] कृष्णवर्ण एको वामनो यवनो निज-शुद्धिक्रियामिषेण धर्मवीरमेनमुपासदत् । मित्रैरनेकैः सङ्केतितोऽप्ययं छलिन्यमुष्मिन् विडाले विश्वस्यामुं धर्ममुपदेष्टुं प्रावर्तिष्ट । एकस्मिन्नहनि सायङ्काले महर्षेर्दयानन्दस्य चरित्रं लिखित्वोत्थाय चाङ्गाकुञ्चनैरालस्यं निरस्यतोऽस्य धीरस्योदरे नराधमेनामुनाच्छु-

रिकया प्राह्रियत । घातकेन तेन तदीयधर्मपत्न्या उपर्यंप्यसिधेनुकया प्रहृत्य विमोच्यात्मानञ्च द्रुतं विद्रुतम् । आततायिहतकस्य प्रहारेण प्रवीरस्यास्यान्त्राणि निकृत्तानि तेभ्यश्च शोणितं रयेण प्रावहत् । योग्योपचारेणापि श्रीपण्डितलेखरामस्य प्राणत्राणं कर्तुं नापार्यत ।

[ई० सन् १९०२] १९५९ तमे वैक्रमाब्दे फाल्गुनशुक्लतृतीया-तिथौ रजन्यां द्विवादने विनश्वरं शरीरं परिहाय धर्मवीरो हुतात्माऽयं परलोकं प्रस्थितवान् । प्राणत्यागसमये धर्मप्राणस्य तस्य वदनारविन्दात् प्रार्थनामन्त्राणां गायत्र्याश्चोच्चारणं प्रवृत्तमासीत् । विद्युद्वेगेनामुष्य मरणोदन्तः परितः प्रसृतः । श्मशानगमनसमये शवेन समं ६० षष्टिसहस्रमिता जनताऽभूत् ।

"आर्यसमाजेन लेखस्य कार्यं नावरोधनीयमिति" अयमेव धर्मवीरस्यैतस्यान्तिमः सन्देश आसीदार्यजनतायै ।



# तर्कवाचस्पतिः श्रीस्वामी दर्शनानन्दः

आर्यसमाजस्य विभूतिषु तत्रभवान् निजकाले तर्कोत्साहयोरतुलावतारः संववृतेतराम्। प्राचीनां वैदिकीं संस्कृतिं समुद्दीपयितुमेकान्तं निरतं बभूव श्रीमतः स्वान्तम्। आर्षग्रन्था बह्वो धीमता प्रकाशिता उद्घाटितानि चानेकगुरुकुलानि।

पण्डितकृपाराम इत्यभिधानमविद्यतास्य गृहस्थाश्रमसमये। १९१८ तमे वैक्रमे वर्षे स्वोद्भवेनायं पञ्चनदीये जगरावाँनामके ग्रामे निवसतोऽष्टवंशीयस्य सारस्वतविप्रस्य ज्यौतिषिकस्य श्रीरामप्रतापस्य वंशं विभूषयामास शिशुहंसः। पिताऽमुष्य संववृते सम्यक् सम्पदासम्पन्नः। बाल्यकालेऽसावधिकतरमुर्दूपारस्यभाषामेवाधिजगे। श्रीमतः श्रीसम्पन्नो जनकः काश्यां निर्धनच्छात्राणां भोजनस्य सुविधायै एकमन्नक्षेत्रमुद्घाटयाञ्चकार यच्चत्वारिंशद्वर्षपर्यन्तं चचाल। अस्मान्निमित्तादेष कतिपयकृत्वः काशीं ययौ। अत एवास्य वाराणस्यां न्युष्य संस्कृताध्ययने महती रुचिरुत्पन्ना। परं महर्षेर्दयानन्दस्योपदेशेनैतस्य चेतसि समुदपद्यतार्षग्रन्थानामगाधं प्रेम। पण्डितपरमेश्वरीदत्ताचार्याद्धरदत्तशास्त्रिणश्चायं [स्वामिमनीषानन्दात्] व्याकरणं षट्शास्त्राणि चाध्यगीष्ट। प्रकृत्यायं निर्भीकोऽभूत्। एष वाराणस्यां वेदशास्त्राणां ग्रन्थानां प्रकाशनाय २५०००) पञ्चविंशतिसहस्रमुद्राणां विनियोगेन 'तिमिरनाशक'— मुद्रणालयमुद्घाटयत्। अष्टाध्यायीं महाभाष्यं काशिकां सामवेदसंहितां दर्शनग्रन्थाँश्चानेकान्त्सटीकान् स्वमुद्रणालये महता परिश्रमेण समप्राकाशयत्। पतञ्जलिमुनिकृतं सम्पूर्णं महाभाष्यं सर्वेभ्यः प्रथममसावेवामुमुद्रत्। छात्रेभ्यश्च व्ययमात्रमूल्येन ग्रन्थलाभस्यानुकूल्यमधमकृत। समपद्यत तत एतस्यातिख्यातिः।

काश्याः पुस्तकप्रकाशिका 'लाजरसकम्पनी' काशिकां व्यक्रीणीत २५) पञ्चविंशतिरूप्यकैः। श्री पं० कृपारामशर्मा तु ५) पञ्चरूप्यकैः हानिमसहमाना 'लाजरसकम्पनी' चकाराभियोगमेतदुपरि। काङ्गड़ीगुरुकुलाचार्येण श्री पं० गङ्गादत्तगुरुणा [स्वामिना शुद्धबोधतीर्थेन] विशेषविवृतिं लेखयित्वा सममुद्रयदिति विजिग्येऽसौ। परमेतस्मिन्नभियोगे बहुतरमुद्राव्ययो बभूव।

१८८२ तमे ख्रिस्ताब्देऽयं पञ्चापप्रान्तमाययौ। तत्र महात्मदलगृह्य एष बहुप्रचारं ततान। ददौ व्याख्यानशतानि चक्रे च वादसमराँस्तर्ककेसरी। १६०० मिते ख्रिस्ताब्दे संयुक्तप्रान्तमाससाद वादनिपुणः शास्त्रचरणः।

संन्यासग्रहणानन्तरमसौ स्वामी दर्शनानन्दस्सन् निजवैदिकधर्मस्य तत्सिद्धान्तानाञ्चातिसमुत्साहसमारम्भेण प्रचारं कर्त्तुं प्रारेभे। शास्त्रार्थेषु युक्तिपरम्परायाञ्च स्वामिनमेनं विजेतुं कोऽपि नापारयत्। एतस्य प्रबलयुक्तीनामग्रे धुरन्धरा नास्तिका ईशवीयाः पादरिणो मुसलमाना मौलवीयाश्च स्थातुं न प्राभवन्। बहुषु स्थानेषु परास्तानमूनकार्दिषः। असौ शतशः पुस्तिका लघीयसीर्लिखित्वा स्वविचारधारां प्राचारयत्। अयं २५० सार्द्धशतद्वयादधिका लघुपुस्तिका अलिखत्। गुरुकुलान्यनेकान्युदघाटयत्। दर्शनान्दग्रन्थमालारूपेण सर्वाः पुस्तिकाः प्रकाशिता अमुना। तत्रभवता स्वामिना सिकन्दराबादज्वालापुरबदायूंबिरालपोठोहारस्थानेषु गुरुकुलानि विनिर्मितानि। यत्रैव श्रीमानगच्छत्तत्रैव मुद्रणालयं गुरुकुलं पाठशालाञ्चास्थापयत्। सिकन्दराबादगुरुकुलसञ्चालनायैवायमपारसम्पत्तिं तृणमिव त्यक्त्वा संन्यासं गृहीत्वा च धर्मक्षेत्रेऽकूर्दत। सर्वत्र निःशुल्का शिक्षा भवेदिति ध्येयमासीत्स्वामिहंसस्य। अत एव स्वस्थापितेषु गुरुकुलेषु निःशुल्कशिक्षापद्धतिं समचालयत्समदृष्टिरयम्। श्रीमतः प्रधानं कार्यक्षेत्रं पञ्चापे संयुक्तप्रान्ते राजस्थाने मध्यप्रदेशे विहारदेशे चैव समवर्तिष्ट।

ऊहशक्तिरतिप्रबलाऽऽसीत्स्वामिनः। हिन्दुधर्मं विहायेशुभक्तो भूत एकः पादरी महत्यां जनसभायां वैदिकधर्ममार्य्यसमाजमुद्दिश्य भृशं मलमुदशालयत्। "जगत् प्रवाहेणानाद्यनन्तं विद्यत" इति राद्धान्तमाक्षिपन्नवादीत्—"दृश्यताम्! एकतः संख्या प्रारभ्यते परं सा समाप्ता न भवति—इति "निशम्यादः श्रोतारो जनाश्चकिता आसन्।" पादरी वेदान् वितथान् वदन्नवामंस्त। अवमानमिमम-सहमानः स्वामिनृपस्सद्यो जनसम्बाधं भिन्दन्नग्रत आयात् प्रत्यभाषत चेत्थम्—"पादरीमहोदय! प्रमाद्यति भवान्। संख्याप्यनादिरस्ति। श्रीमानेकतस्तदंशान् $\frac{1}{2}$ $\frac{1}{3}$ $\frac{1}{4}$ इत्यादि क्रमेण न्यूनीकरोतु, कुत्राप्यादिर्न लभ्येत। एवमेव जगत्प्रवाहेण विद्यतेऽनाद्यनन्तम्।" ईदृशोमलौकिकीं प्रतिभामालोक्य धीमतो लोका विस्मिता अभूवन्।

असौ मनीषिहंसः स्वजीवनकाले दर्शनानामुपनिषदाञ्चार्य-भाषायां सरलभाष्याणि व्यरचयत्। यान्यार्यसिद्धान्तस्य प्रबलपोष-काण्यासन्। हाथरसपुरे १९१३ मिते ख्रिस्ताब्दे पञ्चममासस्यैकादशे दिनाङ्के ५६ षट्पञ्चाशद्वर्षायुषि दिवङ्गतोऽयं तार्किकसिंहः। आर्य-पुरुषैरन्तिममभिलाषं पृष्टोऽयमभाषिष्ट— 'अहं ब्रवीमि यत्समस्ता विधर्मिजनास्सूच्यन्ताम्—यस्य कस्यापि वेदार्थसिद्धान्ते सन्देहस्स्यात् स इदानीमपि शास्त्रार्थं कुर्यात्। मदनन्तरं सम्भवतस्तस्योत्तरं लभ्येत न वा लभ्येत इति।"



# पण्डितप्रवरो गणपतिशर्मा

आर्यसिद्धान्तेष्वचलविश्वासधारिणीषु व्यक्तिषु पं. गणपतिशर्मणः शुभमभिधानमार्यसमाजस्येतिहासेऽतिशयश्रद्धयाऽऽदीयते। वैदिकसाहित्यस्य स्वाध्यायानुष्ठाने निजमखिलं जीवनमयमर्पयामास खलु।

भवदीय उद्भवो बभूव बीकानेरराज्यस्य चूरुग्रामे। भवतः पितृचरणस्य नाम पं० मनीरामो वैद्य इत्यासीत्। अभूत्स ईश्वरविश्वासी धर्मनिष्ठश्च पुरुषः। पितुः संस्काराणां पुत्रे गम्भीरोऽपप्तत् प्रभावः।

पण्डितस्य स्मरणशक्तिरतितीव्राऽवर्त्तत। आर्यसमाजे प्रविष्ट एवायं शास्त्राणामध्ययनं प्रारभत। एष स्वीयमधिकांशसमयं स्वाध्यायेऽयापयत्। तर्कशक्त्यां विकसितायाममुष्य रुचिः शास्त्रार्थे निरतिशया समजायत। येनाऽसावार्यसमाजमण्डलेऽद्वितीयः शास्त्रार्थपटीयान् विद्वानगण्यत।

दिवसेष्वमीषु शास्त्रार्थकर्त्तारो विपश्चितः शास्त्रार्थकरणपणं चक्रुस्तस्यैव च निर्णये समधिकं समयं विनाशयाञ्चक्रुः। कथयामास पण्डितप्रवरः—"सन्धिनिर्णये कालयापनं निरर्थकं वरीवर्ति" इति। एष तु शास्त्रार्थकर्तॄणां निरन्तरमन्वेषणे निरतो ववृते। यस्मिन्नेवार्यसमाजे केनचन पुरुषेण शास्त्रार्थविधानसूचना प्रहीयेत सद्यः पण्डितप्रकाण्डस्तत्राकार्येत। अस्य शास्त्रार्थसंविधाने सर्वेभ्योऽधिकमीदृशं वशिष्ट्यमवर्तिष्ट यत्प्रतिपक्षिदलं कदापि रुष्टं न समजनिष्ट। एतस्य सरलतया सद्व्यवहारेण युक्तियुक्तवार्ताभिश्च कस्यापि मानसेऽपि संरम्भो नोदपद्यत।

तेषु दिनेषु प्रायः सनातनधर्मपण्डितैर्वादसंगरस्संजज्ञे। विद्यते वेदानामपौरुषेयता, वर्तते वेदविरुद्धा मूर्तिपूजा, अस्ति परमेश्वरसिद्धिरित्यादिविषयानवलम्ब्य विशेषतः शास्त्रार्था विविदिरे। पण्डितमणेर्युक्तय इयत्यस्सरलास्समभूवन् यच्छ्रोतारो मनुजा अपि तस्य पक्षे निजनिर्णयं प्रदाय सभामण्डपान्निर्ययुः।

इयत्यां योग्यतायां सत्यामपि पण्डितराजे नाविद्यत मनागप्यभिमानः। अन्ये पण्डिताश्चेदेनस्य सम्मुखेऽभिमानवार्तां कुर्वीरँस्तर्हि तानेष निवारयामास। कथनमासीदस्य— 'स्वयं गुणा एव जनस्य प्रतिष्ठां जनयन्ति। स्वमुखेन निजगुणवर्णनमनुचितं ननु विदुषाम् इति।" उदीर्यंत एतद्विषये यदयं पण्डितपुङ्गवः कदापि धनवतां महति पदे नियुक्तानां कर्मचारिणां वा न चकार चाटुकारिताम्। नाभूत्तस्मिँल्लेशतोऽपि नेतृत्वभावना। स त्वार्यसमाजस्य सेवायाः शास्त्राणां महत्तायाश्च जनतामानसे प्रवेशनमेवात्मविजयममन्यत।

एकदा पण्डितकेसरी काश्मीरं प्रचारार्थं ययौ। दैवयोगेन तत्रैव वाराणसीविश्रुतपादरी मि० जौनसनोऽपि विरेजे। पादरिमहोदयो गीर्वाणवाण्यां प्रवीणो विद्वानवर्तत। धारया संस्कृतमेष भृशमभाषत। यस्मात्कारणात् साधारणधियां पण्डितानां तेन साकं वादविवादविधाने साहसं नाभूत्। स पादरी काश्मीरविबुधान् वादकरणायाह्वास्त। काश्मीरस्थं पण्डितमण्डलं मौनमाकलयत्। ईशवीयमहाशयः काश्मीरनरेशं व्याहार्षीत्—"अत्रभवानात्मराज्यस्य विद्वद्भिर्मम शास्त्रार्थं कारयतु मदीयविजयितायाः प्रमाणपत्रं विश्राणयतु वेति।" समस्ता विपश्चितोऽपृच्छ्यन्त महाराजेन—"भवन्तस्तेन पादरिवरेण शास्त्रार्थं कर्तुं सन्नद्धास्सन्ति न वा खल्विति।" न ददे केनापि बुधेन निजस्वीकृतिः। अन्ततो नरेन्द्रः पादरिणे जौनसनाय विजयपत्रं प्रदातुं बभूव तत्परः।

एतस्या घटनाया वृत्तान्तो विदितोऽभवद् विद्वद्वरेण श्रीगणपतिशर्मणा। पण्डितमण्डनस्तत्कालमेवाजूघुषत्— "कमपि विषयमवलम्ब्याहं पादरिमहोदयेन वादं विधातुं समुद्यतोऽस्मीति।" अस्मात्पूर्वमपि स पादरी मेधाविनाऽमुना शास्त्रार्थं व्यतनुतेति पण्डितप्रवरस्यास्य विद्वत्तामसौ सम्यग् व्यजानात्। इदानीं पादरीश्वरः शास्त्रार्थं निवारयितुमकामयत। परं वादीन्द्रमृगेन्द्रोऽमु-

भन्वरुद्ध । परिणामतः पराजितः पादरी वादसङ्गरे। पादरी देवगिरोत्तरं ददानो हिन्दीगिरा भाषितुमुपाक्रमतायम् । अजानीताततो जनता— "पण्डितप्रकाण्डप्रोक्ताः प्रबला युक्तीः समाधातुं न प्रभुः पादरिप्रभुरिति ।" इत्थं ततो निरुत्तरो भूत्वा पादरिपुङ्गवः परावर्तत परास्तः । महाराजेन पण्डितराजस्यातिवेल सत्कारोऽक्रियत ।

पण्डितेन्द्रः शास्त्रार्थेन सत्रा व्याख्यानदानेऽपि विद्वानगण्यताद्वितीयः । असौ स्वमन्तिमं जीवनं ज्वालापुरमहाविद्यालयस्य सेवायां न्ययुङ्क्त तस्मादेवायमयासीत् सर्वत्र प्रचारकृते। अगाधा प्रीतिर्भक्तिश्चासीदमुष्यार्यसमाजविषये । एतं पुष्पितं फलितञ्चालोक्यानन्दितः समजायतासौ ।

उदपद्यत तनय एक एवास्य मनीषिणः । कालक्रमेणास्य सुतस्य मृत्युरजनि । तदीया गृहलक्ष्मीरपि पञ्चत्वमापद्यत । जीवनकाले न प्राभदनुभवितुं किमपि सुखं स्वकपरिवारभवं कोविदपुङ्गवोऽयम् । अवोचदसौ परं पुनरपि— "संफुल्लोऽयं समग्रः संसार एव ममास्ति ननु परिवार इति ।"

अन्ते पण्डितपतिः १९१२ खिस्ताब्दे जूनमासे सप्तविंशतितमतिथौ लक्षशो नारीर्नरांश्च पर्याकुलान् परिहाय लोकान्तरं प्रतस्थे । मरणोत्तरमेतस्य विविधस्थानेषु शोकसभा व्यधीयत। खिस्तीयबन्धुभिरपि शोकः प्रकाशितः। एतदाया वृद्धा माता सहोदरोऽनुज एक एव जीवितोऽतिष्ठत् । ज्वालापुरमहाविद्यालयेऽस्य मृत्यौ महाशोको व्यतन्यत । यं गुरुकुलवृक्षं स्वामी दर्शनानन्दोऽरोपयत्तं निषिच्य यथाबलं कुसुमितं तरुवरं फलितं कर्तुमुदयुङ्क्ततरामयं बुधवरः। भवन्मृत्युनातमात्रक्षतिरवर्तत महाविद्यालयस्य। नूनमद्भुतं रत्नं व्यराजततरामार्यसमाजस्य गणपतिशर्मा । येन नैजविद्वत्तया वैदिकधर्मप्रचारस्य बृहत्कार्यमक्रियत। यशःशरीरस्यास्य पण्डितप्रवरस्यादर्शं सम्मुखे निधाय सर्वैरार्यजनैरार्यबालकैरार्यसमाजसेवायाः पावनं व्रतं धारणीयं खलु !!

# शास्त्रार्थमहारथः पण्डिततुलसीरामः स्वामी

अभूत्संस्कृतस्य धुरन्धरो विद्वान् मातृभाषाया हिन्द्या अद्वितीयः सुलेखको धार्मिकजगतो विख्यातवक्ता सयुक्तप्रान्तस्थार्यप्रतिनिधि-सभायाः प्रधानः प्रथम आर्यनेता पं० तुलसीरामः स्वामी सामवेद-भाष्यकारः। १९२७ मिते वैक्रमे संवत्सरे परीक्षितगढमण्डलं मण्डयामास स्वजन्मनाऽयं महामनाः। एतस्य पितुर्नाम पं० हजारीलालः स्वामीत्यासीत्। षष्ठे वर्षे बालं तुलसीरामं पिता स्वयमेव पाठयितुमारभत। सप्तमे संवत्सरे तु सुतमेतं महता संस्कारसमा-रम्भेण समं यज्ञोपवीतेन समलंकृतश्चकार जनकः।

गुरुमन्त्रोपदेशसमये गुरुदेवः प्रतिदिनं सहस्रकृत्वो गायत्री-मन्त्रजपनस्य प्रतिज्ञां बालकेनानेन कारयाञ्चकार। तस्याः प्रतिज्ञाया यावज्जीवं नियमपूर्वकममुना पालनं कृतं सुमतिना। पौराणिकप्रथानुसारमेतस्य विवाहोऽल्पीयस्येव वयसि कृतोऽभवत्। विवाहान-न्तरमपि तुलसीराम एष पितुः संस्कृतपाठशालायां पठति स्म। १९३४ तमे वैक्रमे वर्षे भयङ्करदुर्भिक्षहेतोः स्वामिन शिक्षणमन्दिरस्य विद्यार्थिनां भिक्षालाभः परिक्षीणोऽभवत्। तदा पं० हजारीलाल-स्वामिना कठिनं परिश्रमं कृत्वा छात्राणां भिक्षाप्रबन्धो विहितः। स्वतनयस्याध्ययनं स्वोपकण्ठे न्यूनं भवन्निरीक्ष्य स्वामी स्वस्थाने दोतईग्रामवास्तव्यं पण्डितं नारायणदत्तनामानं शास्त्रिणं न्यधत्त।

१९३५ मिते विक्रमवत्सरे तुलसीरामोऽतिभयानकेन शीतलागदेन समाक्रान्तः। आसन्नविंशान् वासरानेष त्वग्विहीनमांसपिण्डसन्निभो भस्मनि शयित आसीत्। तदीयजनकस्य परमात्मभक्तस्य हार्दिक-प्रार्थनया तनयोऽयमुल्लाघोऽभवत्।

१९३६ तमे वैक्रमे हायने देववाणीपठनायायं गढमुक्तेश्वरं प्रति प्रहितः। कतिपयमासपर्यन्तं तदीयजनन्यापि तत्रैव वासः कृतः। अस्य मातामहगृहमपि श्वशुरालयश्चापि गढ़मुक्तेश्वर एवासीत्। १९३९ मितवैक्रमवर्षपर्यन्तमसौ व्याकरणाचार्यात् पं० लज्जारामतः संस्कृताध्ययनमकृत। व्याकरणे काव्ये चातिप्रावीण्यमलम्भि तेन। १९४० तमे विक्रमवत्सरे मवानाग्रामे पं० सोहनलालसकाशात्संस्कृतमध्येतुमयासीत्। तत्र शास्त्रिपरीक्षायां प्रथमश्रेण्यां समुत्तीर्णो भूत्वा पितुरभ्यर्णमायादयम्।

परीक्षितगढे लालाघासीरामपटवारीमहोदयादांग्लभाषाया अपि बोधमविन्दतायम्। तत्रैव चासौ 'सत्यार्थप्रकाश'ग्रन्थमवालोकयत्। ऋषिवरदयानन्दकृतानां समस्तग्रन्थानामनुशीलनमपि तत्रैवायमकार्षीत्। शनैः शनैरमुष्य मानसं समावर्जितमभूदार्यसमाजविषये। १९४३ तमे वैक्रमे हायने जन्माष्टमीदिने परीक्षितदुर्गे प्रथममेतस्य शास्त्रिणस्तुलसीरामस्य व्याख्यानं श्रीमतो घासीरामस्य विशाले भवने समजायत। लालाघासीरामो मयराष्ट्रार्यसमाजस्य सभासदासीत्। तुलसीरामस्वामिनो व्याख्यानस्य नगरे प्रचुरा चर्चा सञ्जाता। यतः परीक्षितदुर्गनिवासिभिरद्यैवाश्रूयत प्रथमं व्याख्यानमार्यसमाजस्य। कियद्दिनानन्तरं स्वामी देहरादूनमगच्छत्। तत्र च पण्डितदिनेशरामशास्त्रिणः स्थाने कानिचिद्दिनानि पाठशालायां बालकानध्यापयत्।

१९४४ मिते वैक्रमवत्सरे परीक्षितदुर्गे जन्माष्टमीमहोत्सवो महता समारम्भेण सम्मानयितुमायोजितोऽभूत्। अस्मिन्नवसरे च पण्डितस्तुलसीरामोऽपि देहरादूनतो न्यमन्त्र्यत जनैः। कृष्णचरित्रविषये भवदीयं प्रभावशालि भाषणं जनताहृदये त्विन्द्रजालमिवाद्भुतं प्रभावमजनयत्। तस्मिन्नेवाहनि च परीक्षितगढे स्थापितोऽभवदार्य-

समाजः। अस्मिन्नेव हायने मयराष्ट्रपुरे स्थापना समजायतार्य-प्रतिनिधिसभायाः। अत्रभवानप्यमुष्या अधिवेशने सम्मिलितो बभूव। अस्मिन्नेव संवत्सरे मयराष्ट्रस्य देवनागरीविद्यालयेऽसौ संस्कृता-ध्यापक आपीन्नियुक्तः। १९४५ तमे वैक्रमे वर्षे कुचलेश्वरराजधान्यां पौराणिकपण्डितैः समं शास्त्रार्थोऽवर्तत स्वामिनस्तस्मिन्नपूर्व-विजयोऽजायतास्य मेधाविनः। कुचलेश्वरमहाराजेन पण्डितप्रवराय तुलसीरामस्वामिने मानपत्रमुपाह्रियत सादरम्।

तदानीं पुराणमार्गी पुरुषवर्ग आर्यसमाजेनातितरां सङ्घर्ष-मकार्षीत्। तदात्वे पुराणधर्मस्य महारथैः पं० भीमसेनशर्म-स्वाम्यात्मारामसंन्यासी-पं. ज्वालाप्रसादमिश्र-पं. कालूरामशास्त्रिभिः साकमेनस्य पण्डितराजस्य शास्त्रार्था अभूवन्। एभिः शास्त्रार्थसङ्गरैः सामवेदभाष्यकारस्यास्यार्यसमाजपण्डितेष्वग्रगण्यता समपद्यत। शास्त्रार्थेषु क्वाप्यार्यसमाजोत्सवेषु चासौ शास्त्रिवर्यः स्वामी समाकार्यत। अमुनाऽऽत्मजीवनमेवार्यसमाजस्य सेवायां समर्प्यततराम्।

पण्डितज्वालाप्रसादमिश्रलिखितस्य "तिमिरभास्करस्य" उत्तरं पं० तुलसीरामशास्त्रिणैव "भास्करप्रकाश-"नाम्ना पुस्तकेनादीयत। पुनरनेन पौराणिकजगते शास्त्रार्थस्य स्थायि समाह्वानं दत्तमासीत्। पं० कालूरामशास्त्री यत्र कुत्रापि "आर्यसमाजपक्षतो वादसंग्रामाय पं० तुलसीरामशास्त्री समायाति समायाद् वेति" समाकर्णयेच्चेत्तत एव केनापि व्याजेन पलायत द्रुतम्। एष शास्त्रार्थातिरथः स्वामी परीक्षितगढ—मवाना—दानापुर—किराण--प्रयाग--काशी--मिर्जापुर-मुरादाबाद--मेरठ--कानपुरप्रभृतिप्रसिद्धनगरेषु शास्त्रार्थरणे विजयी भूत्वा विजयप्रमाणपत्राण्यलभत ततस्ततः।

१९५० तमे विक्रमसंवत्सरे प्रयागवर्तिनः सरस्वती मुद्रणालयस्य व्यवस्थापकस्समजनिष्टासौ। समयेऽमुष्मिन् यन्त्रालयमुत्तनि

नीत्वाऽऽर्यसिद्धान्तविषयकाँल्लेखानलिखद्देषः । लेखैर्विपक्षिणामुत्तराण्यप्ययच्छत् । १९५३ मिते वैक्रमवर्षे स्वामी मयराष्ट्रपतने स्वामिमुद्रणयन्त्रालयमुद्घाटयत् । "वेदप्रकाश"--नामकं मासिकपत्रञ्च प्रकाशयितुमुपाक्रमत । वेदप्रकाशस्य लेखैरार्यजगते भृशं यशो व्यतीर्यत ।

१९०१ मिते ख्रिस्ताब्दे श्रोत्रियशङ्करलालेनाभियोगः कृतः पण्डितमणेरस्योपरि । यतोऽमुना 'वेदप्रकाशे' लेखेनैकेन पौराणिकसंसारायेदमाह्वानं दत्तमभूद्यत्तीर्थयात्रया न विनश्यन्ति पापानि । तानि तया क्षीयन्त इति कोऽपि साधयेच्चेत्तस्मै ५००) पञ्चशतरूप्यकाणां पुरस्कारो दीयेतेति समुद्घोषितश्चाभवत् । "देववन्दस्य" न्यायालयेऽयमभियोगः प्रवृत्तः । पञ्जाप-संयुक्त-मध्यप्रान्तीयानामष्टादशपौराणिकपण्डितानां साक्ष्यं प्रार्थितमभूत् । आर्यसमाजपक्षतः केवलमेकल एव पण्डिततुलसीरामः शास्त्री विरेजे । कियन्ति दिनानि सञ्चलितोऽभियोगः । अन्ततो बुधेन्द्रस्य स्वामिन एव विजयो जातः । १९०६ ई. वर्षेऽसौ संयुक्तप्रान्तप्रतिष्ठिताया आर्यप्रतिनिधिसभायाः प्रधानो निर्वाचितो बभूव । प्रधानेन सतैवानेनार्यसमाजेषु नवजागर्तिरुत्पादिताऽभवत् । समस्तप्रान्तेऽमुना प्रबलं भ्रमणं कृतम् । अमुष्मिन् प्रान्ते तस्मिन्त्समये पण्डितप्रवरस्तुलसीराम एवैक एतादृश आर्यनेता विद्वांश्चासीद्यस्य पाण्डित्येन पौराणिकमण्डल आतङ्क उदपादि ।

१९१३ ई० संवत्सरेऽयमार्यप्रतिनिधिसभायाः प्रधानपदात्त्यागपत्रमददात् । ज्वालापुरगतमहाविद्यालयस्य मुख्याधिष्ठातृपदे न्ययुज्यतासौ । १९१५ मिते ख्रिस्ताब्दे कुम्भमहामेलनप्रसंगे हरद्वार एकं विद्वत्सम्मेलनमक्रियत । यस्यात्रभवानेवाभूत्संयोजकः । प्रकृतेरस्वस्थतया विश्रामग्रहणाय जुलाईमासस्य नवम्यां तारिकायां मयराष्ट्रनगरमागमदेषः । द्वादशतारिकाञ्चैतस्य ज्वरस्समायातः ।

एनस्यानुजेन पं० छुट्टनलालस्वामिना चिकित्साकरणाय कतिपे भिषक्प्रवरा आंग्लवैद्य आहूताः। परं न समजनि कोऽपि लाभः। सप्तदशदिनांके प्रभाते प्रस्थितो दिवं मण्डयितुं मनीषिमण्डल मण्डनस्तुलसीरामः पण्डितः। सर्वत्रार्यसंसारे शोकान्धकारो व्याप्तोऽभवत। देशस्याखिलवृत्तपत्रैः सभाभिश्च प्रादर्शि समवेदना। संयुक्तप्रान्ताधिराजसकाशात् समवेदनासूचको दूरलेखः पं छुट्टनलालस्यार्यप्रतिनिधिसभायाश्चोपकण्ठे सम्प्राप्तः। बहुषु पत्रेषु सामवेदभाष्यकारस्य वाग्मिनोऽमुष्य प्रतिकृतिचित्राणि प्राकाश्यन्त

श्रीमता मतिमतां वरेण सामवेदस्य दर्शनशास्त्राणां मनुस्मृते श्चापि भाष्यमकारि सरलं सुबोधञ्च। ऋग्भाष्यस्य सङ्कल्पस्त्वा मरणमस्थात्।



# आर्यकेसरी श्रीस्वामी श्रद्धानन्दः

आर्यजगति नूनमपूर्वं प्राणानां सञ्चारं चकारार्यकेसरी श्रीस्वामी श्रद्धानन्दः। प्रतिपेदे नामामरं निजं महामना हरिद्वारोपान्तवर्तिनि काङ्गडीग्रामे गुरुकुलमण्डितविश्वविद्यालयं वैदिकप्रणालीप्रणीतं ब्रह्मचर्याश्रमशोभितं विरच्यासौ।

उद्बभूवायं १९२३ त्रयोविंशतिसमधिकैकोनविंशतिशततमे वैक्रमे संवत्सरे फाल्गुनकृष्णत्रयोदश्यां तिथौ पञ्चनदीयजालन्धर-मण्डलस्य तलवनग्रामे। पिताऽमुष्य श्रीनानकचन्द्रो बाल्यादेव शिवभक्तो बभूव। सोऽयमाङ्ग्लराज्यै वीरोऽभूत्सेनानीः। एतस्य सेवयांग्लशासकस्संतुष्य १२०० द्वादशशतबीघामितभूमिं पारितोषिकत्वेन ददौ। तदनु चासौ आरक्षिनिरीक्षको बरेलीनगरे वाराणसी-पुर्याञ्च न्यायालयनिरीक्षकश्चक्रे राज्यपालेन।

श्रीस्वामी श्रद्धानन्दस्संन्यासग्रहणात्पूर्वं महात्मा मुन्शीराम इति नाम्नाऽभवत्प्रसिद्धः। जन्मसमये दैवज्ञैनैतस्याभिधानं 'बृहस्पति'-रिति निदधे।

आसीदयं प्रतिभासम्पन्नो बालको बाल्यकाले। यां वार्तां शुश्राव द्रुतं तां स्मृतिस्थामेष चक्रे। स्वीयैश्चतुरैर्गुणैरयं सर्वेषां स्नेहभाजनं बभूव। बलवति लालने प्रेमणि चायं संववृधे। एकदा बालको बृहस्पतिरतितरां कोलाहलमकरोत्। जनकेनातिमात्रं सन्तर्जितोऽयम्। तर्जनेन खिन्नो भूत्वा बालको रज्ज्वा कण्ठमाबध्य मरणस्य भर्त्सनामददाद् रोदं रोदञ्चाखिलं गृहमाकुलं व्यदधात्। मात्रा कथं कथमपि तूष्णीं कृतोऽयम्।

बाल्ये तुलसीरामायणस्य कथां निशम्य तस्यामस्य भृशं स्नेहस्समजनिष्ट। जनकस्यानेकस्थानेषु सेवापरिवर्तनहेतोः शिक्षा-क्रमोऽस्य नियमितो भवितुं न शशाक। १९३० मिते विक्रमसंवत्सरे

पौषमासादसौ काश्यां नियमपूर्वकं पपाठ। पश्चात् कियन्ति वर्षाण्येष व्यर्थमेव निनाय। परमस्य यूनस्स्वचरित्ररक्षणे निर्भरं ध्यानमवर्तत।

काश्यामेकस्मिन्नहनि विश्वनाथमन्दिरे रीवाँराज्यस्य महिष्याः कारणादेतं युवानं देवमूर्तिदर्शनार्थमभ्यन्तरे गन्तुं सैनिको निवारयाञ्चकार। धर्मद्वारे विलोक्येदृशीमुच्चनीचभावनामयं ख्रिस्तीयो भवितुं विचिन्तयामास। निपपात चक्रेऽयं रोमनकैथोलिकपादरिणो लोफूनामकस्य। एनं पादरिणं प्रमदया साकं घृणितदशायां समीक्ष्य तन्मतादयं न्यवर्तिष्ट। वाराणस्यां सेन्धियातीर्थादधोवर्तिन्यां गुहायामेकः कामान्धो नांगेसाधुरेकामबलामग्रहीत्। अबला समाक्रन्दीत्। असौ वीर एतस्यास्सतीत्वमरक्षत्। सा देवी सन्तानलोभपाशे निपात्य तत्रानीताऽभवत्। एवं विजयादशमीप्रसङ्गे स्नानवेलायां जनसम्मद देवीमेकामनुसरन्तं दुष्टमेष प्रतलप्रहारेण सरलनम्रमकार्षीत्। तत आरभ्य वीरस्य मुन्शीरामस्य हृदये वीरो भवितुमुत्कटवाञ्छा प्रादुरभूत्। इत्थमेव श्रीमान् मथुरायां काञ्चन नवयुवतिं महिलां गोस्वामिनो हस्तादगोपायत्। सापि विलोकनवेलायामस्य गोस्वामिदुष्टवासनामृगयायां पिपतिषूरेव समभूत्।

महाभागोऽयं १६३४ मिते वैक्रमाब्दे गृहाश्रमं प्रविवेश। नवयुवकदशायां वाचितेभ्य आंग्लभाषोपन्यासेभ्योऽस्य चित्ते पत्न्याः काचिदन्या कल्पना समजनि। हिन्दूरीत्या कस्याश्चिदल्पवयस्कायाः कन्यायाः पाणिं गृहीतवतस्तस्य सा कल्पना धूलिसात्प्रपन्ना। ततः प्रभृति चामुष्य मानसे बालविवाहविरुद्धमतितीव्रमान्दोलनमुदभूत्।

बरेलीनगरे १६३६ मिते वैक्रमवर्षे श्रावणचतुर्दश्यां तिथौ समाजगाम महर्षिर्दयानन्दः। तदीयनिवासभोजनादिप्रबन्धोऽस्य पितुरायत्त आसीत्। तज्जनको मुनीन्द्रदयानन्दस्य व्याख्यानेन नितान्तं प्रभावितोऽभूदिति स्वात्मजं मुन्शीराममपि भाषणं समाकर्णयितुं स्वामिवर्यस्य प्रेरयाञ्चकार। मूर्तिपूजायाः खण्डनपरैर्व्याख्यानैः

पितुरिच्छा तु निवृत्ता परमस्य पुत्रस्य हृदये गम्भीरः प्रभावः सञ्जातः। असौ नैजमधिकं कालं स्वामिनो भाषणश्रवणे शङ्कासमाधाने चानयत्। अमुना सत्सङ्गेन मुन्शीरामस्य जीवनं परिवर्तितमभूत्। मद्यपानादिव्यसनादेतं मोचयितुमेनस्य पतिव्रताया भार्याया अप्यपरो हस्त आसीत्। अयमत्युच्चशिक्षां तु लब्धुं नाशक्नोत्। एफ० ए० परीक्षोत्तीर्ण एवासौ नगरपालो व्यधीयत। राजकीये कैङ्कर्येऽपमानस्य कटुनानुभवेन सत्वरमेवायं भृत्यतापरिहारे बाधितः। पश्चादेषोऽधिवक्तृत्वलब्ध्ये प्रावर्तत। १९३७ तमे संवत्सरेऽयं लाहोरपुरे राजनियमशास्त्रमध्येतुमारभत। स्वतन्त्रताया आजीविकायाश्चिन्तामकार्षीदेषः। अधिवक्तृत्वपरीक्षामुत्तीर्णवानयम्। तत्परतया वाक्कीलतां कर्तुञ्चोपक्रान्तवान्। १९४० तमे वैक्रमे वर्षे दीपावलीदिने स्वामिदयानन्दस्य देहावसानसमाचारोऽमुना प्राप्तः। १९४१ मिते संवत्सरे अधिवक्तुरुच्चपरीक्षामप्ययं समुत्तीर्णवान्। एकस्मिन्नामन्त्रणे मद्यपानस्य प्रसङ्गोऽवर्तिष्ट। तत्रास्य मित्राणि मदमत्तानि भूत्वा देव्या एकस्या उपरि राक्षसकृत्यं कर्त्तुकामान्यासन्। देव्याः करुणामयेनार्त्तक्रन्दनेन मुन्शीरामस्य नयने समुन्मीलिते। देवीं तु संरक्षितवान्। तेन समकालमेव मद्यपात्रं काचकुतुपञ्च सम्मुखस्थया भित्त्याऽऽस्फालितवानयम्। चिरन्तनकालाय चास्य व्यसनस्यावसानमजनिष्ट। अस्मात्कालादेव नवजीवनस्य सूत्रपातोऽभवत्। प्रथममयं ब्राह्मसमाजं प्रति प्रवृत्तवान्। आत्मनः पुनर्जन्मनः समस्या एनं सत्यार्थप्रकाशं प्रत्याकृष्टवान्। तत्रत्याष्टमसमुल्लासेनास्य समस्यायाः समाधानं समजायत। तत आरभ्यासावार्यसमाजस्य सभासत्समपद्यत।

आर्यसुहृदामनुरोधेनायं प्रधानो बभूव। तत आरभ्यैव सत्यार्थप्रकाशं गम्भीरतया विचारयाञ्चकार। भक्ष्याभक्ष्यप्रकरणस्यानुशीलनेनास्य मानसे एकमान्दोलनमुत्पेदे। मुन्शीरामो मांसं तु चखाद सद्यमेवामुना त्यक्तमासीत्। एकस्मिन्नहनि स प्रभातेऽनार-

कलीरथ्यायां पिशितभरितं करण्डं वहन्तं भारवाहं ददर्श। अजानां भग्नाश्वरणा बहिरवललम्बिरे। तद्दर्शनसमक्षणमेवैतस्य हृदयं चकम्पे। सत्यार्थप्रकाशस्य पङ्क्तयश्चेतसि तस्य क्रान्तिं जनयाञ्चक्रुः। तस्मिन्नेव दिवसे सायं भोजनसमये स्थालात्पललस्य कंसिकामादायासौ कुड्ये प्रजहार। गृहजनाः पाचकस्य प्रमादं बुबुधिरे परं मुन्शीरामोऽभिदधौ—"नास्ति सूदस्यापराधः। एकस्यार्यस्य सम्मतौ मांसभक्षणं महापापं वर्तत इति।" स्थालेऽङ्गमामिषं सोढुं न शक्नोमि। घटनयाऽनया निरामिषभोजिनां संख्या ववृधे। ततः प्रभृति श्रीमुन्शीरामो महात्मनो वर्त्मना सञ्चचाल।

सुकेतराज्यस्यैकस्मिन्नभियोगे तत्रभवान् व्यजयतेति श्रीमतो अधिवक्तृत्वं दिदीपेतराम्। इतो लवपुरे शास्त्रार्थ एकस्मिन्नतितरामस्य विजयोऽभूत्। १९४३ विक्रमसंवत्सरे श्रीपं० गुरुदत्तविद्यार्थिनस्सत्सङ्गस्य लाभो लेभे मुन्शीरामेण। एषम एव सनातनधर्मावलम्बिना विश्रुतेन विदुषा दीनदयालुना शास्त्रार्थसमरोऽस्य संजज्ञे। धर्मप्रचारस्य श्रीमत उत्साहः सववृधेतराम्। दूरदूरेषु मण्डलेषु प्रचाराय ययौ धीमान् एकदा कपूरथलापुरेऽपि बभूव वादरणो मूर्तिपूजाविषये भृशम्।

१९४६ वि० संवत्सरे चैत्रपञ्चमीतिथौ [ता० १९ मार्च १८९० ई० सन्] श्री पं० गुरुदत्तस्य विद्वद्वरस्य देहान्तघटना श्रीमुन्शीरामकृते सुतरामसह्या समभूत्। अयं विद्वद्रत्नं गुरुदत्तं स्वस्वाध्यायस्य पथप्रदर्शकं मेने। श्रीपण्डितमणेरखिलोऽपि कार्यभार इदानीमेतस्य शिरसि समापतितः। तत आरभ्यैवासौ महात्माऽभ्यधीयत। १९०२ तमे ख्रिस्ताब्दे कांगड़ीगुरुकुलस्योद्घाटनं सञ्जातम्। १९५९ वैक्रमाब्दे 'सद्धर्मप्रचारक'— पत्रमुर्दूविसर्जनपूर्वकं हिन्दीभाषायां निरसार्यत महात्मना। तदीयं मुद्रणालयं गुरुकुल एव व्यलसत्।

१९४८ तमे वैक्रमवर्षे भाद्रपदस्य पञ्चदश्यां तिथौ श्रीमतो धर्मपत्नी कठिनरोगपीडिता सती सन्तानचतुष्टयं विहाय दिवं जगाम। सम्बन्धिजनानुरोधे सत्यपि नायं द्वितीयं विवाहं विदधौ। १९६१ विक्रमसंवत्सरे महात्मा संन्यासं स्वीकृत्य 'स्वामी श्रद्धानन्द' इति नाम बिभराम्बभूव।

महात्मा मुन्शीरामो गुरुकुलस्य प्राचीनादर्शपूर्त्तये १८९८ ख्रिस्ताब्दे आर्यप्रतिनिधिसभायां प्रस्तावं विदधे। ३००००) रु० त्रिंशत्सहस्रमुद्रासंग्रहणाय च प्रतिज्ञां विधाय भ्रमणार्थं निर्ययौ। त्रिभिर्वर्षैः ४००००) रु० चत्वारिंशत्सहस्ररूप्याण्ययं सञ्चिकाय। हरद्वारे भागीरथीतीरे वदान्येन स्वर्गस्थश्रीमदमरसिंहेन प्रदत्तायाँ वसुन्धरायां काङ्गडीग्रामसन्निधौ १९०२ मितेशवीयाब्दे मार्चमासे महात्मना गुरुकुलं संस्थापितम्।

गुजराँवालानगराद् एकोनत्रिंशद् ब्रह्मचारिण इहानिन्यिरेऽमुना। अधुनेयं संस्था स्थिरतया त्रिचत्वारिंशद् वर्षाणि पूर्णानि कृत्वा 'गुरुकुल'वश्वविद्यालय'नाम्ना सञ्चलति। भिन्न-भिन्नप्रान्तेषु दशाधिकशाखास्वस्याः पञ्चदशशतानि ब्रह्मचारिणां गृह्णन्ति शिक्षणम्। श्रीस्वामिना दर्शनानन्देनातः पूर्वमेव संयुक्तप्रान्ते प्राचीनादर्शप्रणाल्या निःशुल्कानि सञ्चालितानि व्यराजन्त गुरुकुलानि त्रिचतुराणि।

आर्यसमाजस्य जागर्त्तिः ख्रिस्तीयानां प्रगतिं शिथिलयाञ्चकारेति तैराङ्ग्लशासकानां कर्णा मिथ्यावृत्तान्तेन पूर्णाश्चक्रिरे। आर्यसमाजञ्च शासकानां शत्रुभूतां राजद्रोहिणीं संस्थां प्रदर्शयितुममी प्रचक्रमिरे। फलत आर्यसमाजोपरि दमननीतिरुपक्रान्ता राज्याधिकारिभिः। पटियालादिराज्यपालैरप्यार्यसमाजिकास्सुतरां सम्पीडिता अकारिषत। तदानीमपि महात्मनाऽत्यर्थमान्दोलनमक्रियत। विविधैरुपायैश्च गुरुकुलेऽपि राज्यपालं महाशासकञ्च

निमन्त्र्य प्रेम्णा तदीयसन्देहो न्यवार्यत । इत्थमार्यसमाजं सम्यग् जुगोप महात्मा मुन्शीराममहोदयः ।

१६०८ ई० वर्षे [सं. १९६५] प्रयत्नं विधायायमेव सार्वदेशिक-सभामस्थापयदेष एव तदीयः प्रधानो निर्वाचितोऽभूत् । अमुष्य मानसे हिन्दीभाषाया अपारं प्रेमासीत् । प्रेम्णैव प्रेरितः पञ्चविंशति-वर्षप्रत्नमुर्दूपत्रमार्यभाषायां प्राकाशयदसौ । आर्यभाषायामयं बभाषे । एष भागलपुरे हिन्दीसाहित्यसम्मेलनस्य सभापतिरपि व्यधीयत । स्वीयैर्महद्भिर्गुणैरयं लोकप्रियो नेता बभूव । महापुरुषेष्वमुष्य गणना भवितुमारब्धा । भवदीयव्यक्तित्वप्रभावो महात्मनि गान्धि-महोदये मोहनदासे भूयानभूत् । दीनबन्धुः श्रीमदेण्डरूजमहाभागस्तु गुरुमेनं मेने । अनेके आंग्लभौमा प्रसिद्धपुरुषा एतमाशीर्वादं ययाचिरे । गढवालप्रदेशे दुर्भिक्षपीडितानां साहाय्याय श्रीमान् सप्ततिसहस्ररूप्याणि सञ्चिकाय । चतुःपञ्चाशत्सहस्रादधिकमुद्राः सहायतायां व्ययीचकार । अवशिष्टञ्च द्रविणं पञ्चापार्यप्रतिनिधिसभायै समर्पयामास ।

१९१९ ईशवीये वर्षे मार्चमासस्य त्रिंशत्तमे दिनाङ्के दिल्ल्यां निष्क्रियप्रतिरोधसत्याग्रहनिमित्तेन महानसहयोगविग्रहो जातः । संयानस्थात्रे भुशुण्डीनालीका विसृष्टाः । कम्पनीमहोद्याने सभा सञ्जाता तस्यामपि नलिकानालीकास्सञ्चालिताः । परं वीरनेता संन्यासी श्रद्धानन्दो गोरक्षसैनिकानां पट्टिशानां पुरस्तात्स्वं वक्षःकपाटं सन्धृतवान् येनाभेद्या शस्त्रसेनापि पदद्वयं पश्चादपसृता । इत्थमात्मसमर्पणद्वारा संन्यासिना लक्षजनसमूहो यन्त्रनलिकाभिराहनिष्यमाणः संरक्षितो बभूव ।

शुद्धीकरणस्य हिन्दूसङ्घटनाकार्यस्य चायं तु प्राण आसीत् । भवदीयशुद्धीकरणान्दोलनेन हिन्दूसमाजे क्रान्तिर्जनिनाऽभूत् । नवयवनाननेकान् मुसलमानवर्गांश्च विपुलसंख्यायां शुद्धानकरोदयम् । अनेन कर्मणा मोहम्मदीयाः स्वामिक्षितिपतेः प्राणानपि समाहर्तुं समुद्यता बभूवुः ।

स्वामिसकाशे प्राणहरणस्य विभीषिकापत्राण्यागन्तुमुपक्रान्तानि। इतः स्वामिवर्यस्य स्वास्थ्यं नितान्तं विकृतमभवत्। गदेन देहो निर्बलोऽवर्तत। १९२६ ई० वर्षे दिसम्बरे २३ त्रयोविंशे दिनांके प्रातरेको नवयुवको मुसलमान इसलामधर्मविषये वार्तालापव्याजेन समागमत्। स आहूयोपवेशितः। स सक्तु जलपानमिषेण बहिरगच्छत्। निवर्तमानेन तेन संन्यासिनो निर्बलशरीरे भुशुण्डिकागोलिका विसृष्टाः। विद्यालङ्कारेण श्रीधर्मपालेनाततायिहतक एष अब्दुलरशीदनामा प्रगृहीत आरक्ष्यागमनपर्यन्तञ्च प्रसह्य धृत आसीत्। एवममरो हुतात्मा श्रीस्वामी श्रद्धानन्दः प्राप्तवानमरपदम्।

स्वामीसिंहस्य शवयात्रायामियान् विराड्जनसमुदायः श्मशानं यातवान् यत्सपादक्रोशं यावन्नरमुण्डमण्डलान्येवालोक्यन्त। श्रद्धावीरतासाहससमुद्योगदेशभक्तिधर्मप्रीतिलोकसेवाप्रमुखगुणनामद्भुतस्तेजस्वी रुचिरावतारः श्रीस्वामी श्रद्धानन्दस्संसारे चिरस्मरणीयो विलसतितराम्।



# पञ्जापकेसरी श्रीलाला-लाजपतराय:

आर्यसमाजस्य स्वदेशस्य धर्मस्य च सेवकेषु श्रीलालालाजपतरायस्स्वपद्धत्यैक एव पुरुषरत्नं बभूव । लालामहोदस्य जनि: पञ्चापप्रान्ते जगरावाँस्थाने १८६५ पञ्चषष्ट्युत्तराष्टादशशतमिते ख्रिस्ताब्देऽष्टाविंशतिदिनाङ्के जनवरीमासस्याभवत् । श्रीमत: पिता श्रीलालाराधाकृष्ण: पञ्चनदीयशिक्षाविभागे कार्यमकरोत् । स प्रायो नानास्थानेषु परिवर्तितोऽजनिष्ट । असौ बालकं लाजपतमपि जन्मभुवि न निधाय निरन्तर स्वेन समं समरक्षत् स्वयमेव चैनमपाठयत् ।

अयं प्रारम्भे लुधियानानगरे मिशनपाठशालायामपठत् पश्चात् पित्रा साकं सोऽम्बालानगरमगच्छत् । १८८० तम ई० वत्सरेऽसौ पञ्चापे कलकत्तानगरे चोभयत्र मैट्रीकपरीक्षां समुत्तीर्णवान् । छात्रवृत्तिरमुना लेभे । अयं एफ० ए० पाठ्यक्रमस्य मुख्यतारकपरीक्षायाश्च सम्भारमकार्षीत् । विद्यार्थिकाल एव श्री पं० गुरुदत्तो विद्यार्थी महात्मा हंसराजश्चास्य सुहृदावभूताम् ।

मुख्यतारकत्वमुत्तीर्यासौ मुख्यतारककार्यं कर्त्तुं प्रारभत । अथ पुनर्वाक्कीलत्वमुत्तीर्य १८८६ ख्रिस्ताब्दे हिसारे तत्प्रयोगं विधातुमुपाक्रमतायम् । १८८३ ई० वर्षे लवपुरमाययौ । १९४० वै० वर्षे दीपावल्यां महर्षेर्दयानन्दस्य द्युलोकगमनमभवत् । एतन्निमित्ते यद्भाषणमेष महर्षिजीवनविषयेऽददात्तेनामुष्य व्याख्यानस्य भूयानभूत्प्रभाव: ।

वर्षत्रयादनन्तरमयं "दयानन्दांग्लवैदिकमहाविद्यालयस्य" [डी० ए० वी० कॉलेजस्य] योजनायां संलग्नोऽवर्तत । स्वयमेष कालेजप्रबन्धकसमित्या मन्त्री तथोपसभापतिरतिष्ठत् । कियन्ति वर्षाणि किमप्यनादाय सेवाभावेनाध्यापककार्यमकृतासौ । अविश्रान्तश्च समाजसेवां व्यधत्त ।

उत्तरभारते १९५३ वै० वर्षे राजस्थाने च १९५६ संवत्सरे भयङ्करदुर्भिक्षसङ्कटेन जनतायां हाहाकारक्रन्दनं प्राक्रम्यत। अमुष्मिन्नसमये ख्रिस्तीयैर्मनुजै रीशुख्रिस्तमतं प्रथयितुं प्रभूतं प्रायत्यत। तदालोक्य लालालाजपतरायमहोदयेनानाथानां कृते विपुलं कार्यं कृतम्। अकालपीडितान् भिवान्या मुजफ्फरपुरस्य चानाथालयेषु समानीयायं समरक्षत्। अनेन प्रकारेण द्विसहस्रप्रायानन्नाथानगोपायदयम्। १९०२ ख्रिस्ताब्दे श्रीमानेष दुर्भिक्षसमितावप्यासीत्। १९०५ ई० वत्सरे १९६२ वैक्रमवर्षे काङ्गडाप्रान्ते बभूव महान् भूकम्पः। भवदधीनतायां लवपुरीयार्यसमाजेन बृहती सहायता दत्तासीत्तदर्थम्। भवदीयस्वयंसेवकदलेन बृहत्कार्यं व्यधीयत।

देशसेवाकर्मण्यप्यसौ तत्परोऽस्थात्। यत्फलस्वरूपतः श्रीमन्तं समाजभूषणं भारतशासकस्स्वदेशान्निर्वास्य माण्डले कारागारे प्राहिणोत्। तस्माद्विसृष्टोऽयं पुनरुडीसासंयुक्तप्रान्तयोरकालपीडितानां साहाय्यकार्ये सम्मिलितोऽजायत। एष्ववसरेषु पञ्चापकेसरी भृशं मर्मस्पृशि भाषणान्यदात्। देशसेवोत्कण्ठयाऽयं राष्ट्रियसभाकार्ये प्रावर्ततरतराम्। १९०४ तमे ख्रिस्ताब्दे मोहमयीपुरीकृतराष्ट्रितसभाधिवेशने प्रस्तावः पारितोऽभवत्—"आंग्लभूमौ प्रतिनिधिमण्डलं प्रेषणीयमिति।" पञ्चनदप्रान्ततः श्री लालाजीमहोदय एव प्राहीयत। मार्गव्ययोऽस्य लवपुरस्थभारतीयसमित्याऽसह्यत तत आगत्यासौ मार्गव्ययस्याप्यर्द्धधनं डी० ए० वी० कालेजाय शिष्टार्द्धञ्च द्रव्यं पञ्चापे राजनीतिशिक्षार्थं प्रायच्छत्। आंग्लद्वीपेऽयमेकस्मिन् मासे चत्वारिंशद् व्याख्यानानि प्रादात्। आंग्लदेशान्निवृत्यैष स्वकीयां दृढां धारणां प्रकटितवान्—"स्वराज्ययाचनानीतिं परिहाय वयमात्मचरणाधारेणैवोत्तिष्ठेमेति।" बंगविच्छेदप्रसंगे बंगेषु सत्याग्रहक्रान्तिरजायत। अस्मिन्नवसरेऽमुना स्वदेशीयवस्तुप्रयोगादेरपि महदान्दोलनमुद्भावितम्। पञ्चापे श्वेतवर्णः एकः सैनिकाधिकारी मि.

स्पेन्सरो मृगयायां वराहं निहत्य निजयवनसेवकं सूकरशवमुत्थाप्य भवनं नेतुमकथयत्। धर्मदृशाऽसावेनं न्यषेधीत्। अत: सितत्वक् स्वामी किङ्करमिमं भुशुण्डीगोलिकयाऽहन्। अयं वृतान्त: प्रकाशित इति 'पञ्जाबी'नामकपत्रसम्पादकस्य श्रीलालाजसवन्तराय एम० ए० महाशयस्योपरि प्रान्तशासकोऽभियोगकार्षीत्। एतस्मात्कारणात्पञ्चापे महानावेशो वितत:। सरदारस्याजितसिंहस्यावेशमयानि भजनानि पञ्जाबजनतामजागरयन्। अस्मादेव निमित्ताद् १६१८ ख्रिस्ताब्दे श्रीलालाजीनेताऽजितसिंहेन सार्द्धमेव देशान्निष्कासित:। बहूनां प्रग्रहणं सञ्जातम्।

श्रीलाजपतरायमहोदयो माण्डले सम्प्रेषितोऽभूत्। एतेन देशनिर्वासनेन निखिले देशे बृहदान्दोलनं प्रचलितम्। एनस्य चर्चा प्रजानियुक्तसभायामपि सम्प्राप्ताऽभवत्। "एष भारतीयसेनामुत्तेजयतीति" दोषोऽमुष्य देशबहिष्कारविषये संयोजितोऽभूत्। अयं माण्डले बन्धनालयान्निर्मुक्त:। चारकेऽनेनानेकलेखा ग्रन्थाश्चालिख्यन्त।

कारागारान्मुक्ताय श्रीलालाजीनररत्नाय लवपुरीयजीवनं नारोचत। अतोऽसौ पुनरांग्लभूमिमयासीत्। तत्रायं भृत्यप्रथाया अत्याचारानुद्दिश्य तीव्रमान्दोलनमतानीत्। प्रायस्तत्रत्यै: सर्वविधस्थितिभाग्भिर्मानवैरेतस्य व्याख्यानादीनि बहुरुच्याऽश्रूयन्त। तत्र तत्रभवतांग्लदेशे महतोत्साहेन पौषशुक्लसप्तम्यां श्रीगुरुगोविन्दसिंहस्य जन्मदिवसोऽमान्यततराम्। पञ्जाबकेसरी तत्रासौ भारतसम्बन्धिनीं मिथ्यामतिमपाकृत।

आंग्लदेशान्निवृत्यैष १९०९ ई० वर्षे पञ्चापप्रान्ते हिन्दूमहासभामस्थापयत्। १९१० ख्रिस्ताब्दे श्रीमान् पुनरांग्लभौमदेशमगमत्। तस्मिन् देशे मान्यमहोदयोऽयं डाक्टरनवनिधिरायस्य विवाहविधिमेकयांग्लमहिलया समं चर्चमन्दिरे न कारयित्वाऽन्यत्र निवासगृहे संस्कारविधिना कारयाञ्चकार। महिलाञ्च पावयित्वाऽऽर्यां विदधे

१९११ ई० वर्षे फरवरीमासस्य त्रयोविंशतितारिकायामेतस्य हृदये स्वपुत्रमरणस्य महानाघातोऽलगत् । अस्मात् प्रागयं जामातृनिधन-प्रहारमपि व्यसहिष्ट अस्मिन्नेव हायने स पञ्चनदप्रदेशे 'शिक्षासमिति' स्थापितवान् । शिक्षाप्रसाराय चानेकाः पाठशाला उद्घाटितवान् ।

समयेऽमुष्मिन् दक्षिणाफ्रिकाप्रान्ते सत्याग्रहः प्रवृत्त आसीत् । तस्मिन् प्रसंगे प्रतिनिधिमण्डल एकस्मिन्नयं भूय आंग्लभूमिमयात् । तस्मादेवासौ प्रायादमेरिकाखण्डम् । समस्तमस्य संयुक्तप्रान्तमयम-भ्रमत् । निवृत्य तत एष ओजस्विपुस्तकानि समलिखत्प्राकाशयच्च । तेषु 'तरुणभारतम्' [यंग इण्डिया] इति नामकं पुस्तकमियदापत्ति-जनकममन्यत यदांग्लशासकस्तद् भारतदेशमानेतुं न्यषेधीत् । अमेरिकादेशे श्री डा० पं० केशवदेवः शास्त्री श्रीमतः सहयोगी समभूत् । १९७७ वैक्रमसंवत्सरेऽत्रभवान् 'वन्दे मातरम्' इति नामकं पत्रं समचालयत् । आसीदिदं भवदीयमुद्देश्यम् – "स्वत्वपूजा मम धर्मः । समाजसेवा मम विश्वासः । विश्वसेवा मम पूजा । मदन्तःकरणं मम न्यायालयः । मम लेखनी मदीया सम्पत् । मम हृदयमेव मन्दिरम् । सदा नूतन एव मम समुत्साहः । आर्यसमाजसंस्था मम माता । महर्षिदयानन्दो मम धर्मपिता ।"

पूज्यश्रीलालाजीनरवीरस्य सन्देश आसीत्—"यावत्तु स्वराज्यस्य मूल्यं न प्रदीयेत तावत्स्वराज्यं न प्राप्यतेति प्रत्येकेन भारतीयेन सम्यगवगन्तव्यमिति ।" "या जातिः स्वाधीनतासम्पादनाय सर्वस्वं समर्पयितुमुद्यता न भवेत्सा स्वतन्त्रतां लब्धुं कदापि न प्रभवेत्खलु !!" योरोपीयनप्रथममहाभारतविग्रहादनन्तरं १९१९ ई० वर्षे रौलेट-विधानमुपयोजितमभवत् । महती विततोत्तेजना । शासनकर्त्तुर्दमनच-क्रमतिरंहसा समचलत् । आन्दोलनेन संक्रुद्धः पञ्जापराज्यकर्त्ता पञ्चापपञ्चाननं पुनरपि कारके न्यरुणत् । नरवीरस्याष्टादशमास-

पर्यन्तं बन्धनालयनिरोधः पञ्चशतरुप्यकदण्डोऽष्टमासानाञ्च कठोर-कारागृहदण्डोऽजनि। अस्मिन् वारे वीरपुङ्गवस्य स्वास्थ्यमक्षयत्। देहे क्षयामयेन क्षयो व्यधीयत। येन १६२३ ई० वत्सरेऽगस्तमासस्य १३ दिनांके मानवमृगाङ्कोऽयं कारालयाद् व्यसृज्यत। एतस्मिन्त्समये समग्रदेशेन प्रमुदिततयाऽमुष्य स्वागतमक्रियत। सकलेभ्यो विषयेभ्यो लोका श्रीमतो लोकप्रियस्यालोकनाय समगंसत।

श्रीलो लालालाजपतरायो बहुलदानशीलो महापुरुषो व्यलसत्। डी० ए० वी० कालेजाय कतिपयसंस्थाभ्यश्चाप्येष ददावसकृद्दानम्। १६११ ई० वर्षे काशीस्थाय हिन्दूविश्वविद्यालयायापि सार्द्धैकसहस्र-मुद्रा विततार जनतारकोऽसौ। निजजन्मभूमौ जगरावाँमहाग्रामे स्वपितृचरणाभिधाने "राधाकृष्णहाईस्कूल"— नामको विद्यालयो निरमीयतामुना। ईदृशस्य देशभक्तस्य वाग्विचक्षणस्य वदान्यस्य कर्मवीरस्य पदारविन्दयुगले मस्तकमादरेण प्रणम्रं सम्पद्यत एव।

गीर्वाणवाण्यामार्यभाषायाञ्च वाणीप्रवीणस्यास्य नैसर्गिकं प्रेमाविद्यत। माननीयमहोदयस्य विविधा लेखा हिन्दीभाषायाः प्रशस्तमासिकपत्रिकासु मर्यादाभ्युदयसरस्वतीप्रमुखासु प्राकाश्यन्त। श्रीमता संस्थापितस्य "शैक्षणिकसङ्घस्य" सर्वासु पाठशालासु हिन्दी-भाषयैव शिक्षणमदीयत। १६७७ मिते वैक्रमवर्षे श्रीमानेव हिन्दी-साहित्यसम्मेलनं लवपुरे न्यमन्त्रयत। तत्रभवतैका सूचनाप्येतादृशा व्यतीर्यत—"ये जना मया समं पत्रव्यवहारं कुर्युस्ते हिन्दीभाषायामेव विदध्युरन्यभाषालिखितपत्राणां प्रतिवचनं न प्रयच्छेयमिति।" अत्रभवताऽनेकग्रन्थानां रचना व्यधायि।

महापुरुषेष्वस्य पुरुषरत्नस्य गरीयसी भक्तिरासीत्। श्रीमता एम० ए० पदवीधरस्य पं० गुरुदत्तस्य, ग्वीसेपमेजिनीसमाख्यस्य, गेरीवाल्डीवीरस्य, श्रीशिवाजीराजस्य, श्रीकृष्णचन्द्रनरेन्द्रस्य च जीवनचरित्राण्यलिख्यन्त। एकं पुस्तकमार्यसमाजं तत्प्रवर्तकं महर्षि-

दयानन्दश्चावलम्ब्यांग्लभाषायाममुनाऽलेखि । यल्लन्दनराजनगरे मुद्रितमभूत् । अमेरिकामुद्दिश्यैकं पुस्तकं प्रणायि । तथा च 'तरुणभारतम्' 'आंग्ललोकोपरि भारतस्यर्णम्' भारतस्य राजनीतिकं भविष्यम्' इत्याद्यानि महामहत्त्वपराणि पुस्तकान्यरच्यन्त महोदयेन । कारावासे भवता 'भारतवर्षस्येतिहासो' लिखित आसीत् ।

लवपुरे सत्याग्रहदलस्य नेतृरूपेणायं सभ्यजनयात्रासमारोहं नयन्नगच्छत् । तां संयात्रामारक्षिदलं पुरः प्रतिष्ठमानां न्यषेधीत् । पौररक्षकनायकश्चैनमेनस्य सहयोगिनोऽग्रगामिनो लोकांश्च प्राजीहरद् यष्टिभिः । अनया घटनया निर्भरं घातकप्रहारमयमसहिष्ट । कतिपयदिनानन्तरमनेन घातकप्रहारेण दिवं सनाथितवानसौ पञ्चनद-पञ्चाननो नरनाथः । एतस्य नररत्नस्य मरणोदन्तो विद्युद्वेगेन निखिले भारतवर्षे बृहता विक्षोभेणाकर्ण्यत । इत्थं स्वदेशस्य स्वतन्त्रताबलिवेद्यामद्वितीयकर्मयोगो महात्यागी महापुरुष आत्मानं हुत्वा बभूवामरयशा अमरः ।



# श्रीमान् डॉ. केशवदेवः शास्त्री एम.डी. पदवीधरः

संस्कृतविद्वानप्येकः केनोत्साहेन केन विश्रुतोद्योगेन कया लोकसेवया देशसेवया समाजसेवया चाग्रणीर्भवितुमर्हतीति वार्तायामेतस्यामेव शास्त्रिमहोदय उत्तममुदाहरणं समुल्लसतितराम् ।

यतः प्रभृति शास्त्रिपरीक्षां समुत्तीर्णवानयं ततः प्रभृत्येव लोकदृशा समुज्ज्वलं जीवनमस्य प्रक्रान्तं भवति । शास्त्रिपदलाभानन्तरमसौ जगाम कलकत्तापुरीमायुर्वेदाध्ययनाय । तत्रात्रभवत उद्यमस्य परिश्रमस्य नियमपालनस्य समयपालनस्य च शीलेनैतदाचार्यः सुतरां प्रसन्न आसीत् । स स्वशिष्ये पूर्णसफलतामङ्कितां समैक्षत खलु !!

असौ स्वसङ्कल्पितेऽर्थे द्रढिष्ठोऽतिष्ठत् । तत्पूर्त्यै स सर्वस्वमपि त्यक्तुं समर्थोऽवर्तिष्ट । धनोपार्जनकृत्यमेकामतितुच्छकलामयमबोधिष्ट । अयं जयपुरराज्ये केवलमेकस्य रुग्णस्य चिकित्सया ४००) रु० चतुःशतानि मुद्राः प्रत्यहमादाय लक्षद्वयरुप्याण्युपार्जयत् । परन्तु जीवनस्य विशिष्टे कार्यक्रमे पुरोगमे वा बाधामुद्भवन्तीमवलोक्यासौ स्वीयं गृहमस्राक्षीदखिलाञ्च सम्पदमन्येभ्यः सम्प्रादात् । संयानकार्यालयस्य सेवायां वेतनवृद्धिरभूद्भविष्यन्ती तथाप्येष संयानभुजिष्यतां परिहाय प्रास्थित ।

आयुर्वेदशिक्षणानन्तरमसौ काश्यां कार्यमकार्षीत् । तत्रानेकनेतृणां परिचयलाभमकृतायम् । लोकसेवया समं वैद्यकृत्यमस्यार्थोपार्जनस्य साधनमात्रमवर्तत । वाराणस्यामेष समाजसुधारकार्यमकरोत् । तत्रत्येष्वार्यविद्यार्थिषु विशिष्टजीवनोत्साहमुद्भावयदयम् । नाना निर्धनाश्छात्रा अमुष्मादार्थिकीं सहायतामलभन्त ।

अयं काशीतः प्रथमं हिन्दीभाषायां 'नवजीवनम्' नाम पत्रं निरसारयत् । स्वतन्त्रैरुदारैश्च विचारैः पत्रमिदं लोकम्पृणं समजनि । नाना नवयुवका नवयुवतयश्च शास्त्रिवरात्परामर्शं जगृहिरे । असङ्गतविवाहगर्त्ते निपतनादात्मानं संरक्षितुमनेकयुवकान् नैकयुवतीश्चायं बोधयाञ्चकार ।

आर्यकुमारसभानां भारतवर्षीयार्यकुमारपरिषदाञ्च स्थापनया शास्त्रिप्रवरस्तरुणीनां तरुणानां विशेषतः पथप्रदर्शकोऽजनि । राज्यरत्नं माननीय आत्मारामहोदयोऽमृतसरवास्तव्यः श्रीकेशवदेवशास्त्रिणं परमयाशया समैक्षत । अवोचदसौ महात्मा—"एष विदेशेषु पण्डितरत्नश्रीगुरुदत्तस्य एम० ए० पदालंकृतस्य तस्यार्यधर्मप्रचारकामनां पूर्णां विधास्यतीति ।"

शास्त्रीश्वरस्य सत्सङ्गेनायंनवयुवकाः परमोत्साहसम्पन्नास्समपद्यन्त । असौ तेषु सामाजिकजीवनविद्युतं प्रकाशयामास । अयं कदापि कस्यापि दलस्य नासीत्पक्षपाती प्रत्युत प्रत्येकदलमेनं स्नेहदृष्ट्याऽद्राक्षीत् । अयमन्येषामालोचनाकरणापेक्षया कार्यकरणं श्रेयस्करं मेने । कर्मण्यताया उपासकोऽभूदेषः । अन्यथाग्राहितायाः कदापि नायं बिभाय नोद्विविजे वा । विमतिं निराकर्त्तुमसौ प्रयेते । सदा सुप्रसन्नस्तस्थौ । वैदिकेषु सिद्धान्तेषु विशश्वासतरामेष ।

शिकागोनगरविराजमाने विश्वधर्मसम्मेलने स शास्त्रिदेव आर्यसमाजस्य प्रतिनिधित्वेनामन्त्रितो ययौ । तत्र वैदिकसिद्धान्तानां नितान्तं प्रचारञ्चकार चारुमतिरयम् । श्रीमान् महान् पक्षपाती बभूव गुणकर्मस्वभावानुकूलं विवाहकरणस्य । अमुना सिद्धान्तेन प्रेरितस्सन्नयमेकस्या अमेरिकनमहिलायाः पाणिग्रहणं विदधे ।

शास्त्रिवरः शिकागोविश्वविद्यालयाद् "एम० डी०" समाख्यां पदवीमादाय भारतदेशं निववृते ततः। एष महाभागोऽमेरीकावर्तिन्यां पनामाप्रदर्शन्यामपि भागं ग्रहीतुं जगाम १९१४ ई० वर्षे।

देहल्यामत्रभवानत्र विद्युच्चिकित्सार्थमारोग्यमन्दिरं समुद्घाटयामास। दूरदूरत एव चिकित्साकृते समाययुर्गदाक्रान्ता जना इहानातरम्। अस्मिन् कर्मणि कीर्तिमतुलां द्रविणञ्चाप्यतिशयमयमुपार्जयामास। एष दिल्लीस्थार्यसमाजस्य प्रधानः सार्वदेशिकार्यप्रतिनिधिसभायाश्च षड्वर्षाणि यावन्मन्त्री विरराज। मथुरापुर्यां महर्षिदयानन्दजन्मशताब्दीमहोत्सवस्य सफलतायां समभूद्भवतो महान् समुद्योगः। "हा हन्त! तत्रभवन्तोऽस्माल्लोकादकस्माद्दिवं समलंकृतवन्तस्सन्तो गुणवन्तः।

भारतवर्षीयार्यकुमारपरिषदो जन्मदातृत्वेन श्रीमतोऽभिधानमार्यसमाजस्यार्यकुमारसभानाञ्च सुन्दरेतिहासे चिरस्मरणीयममरं संजज्ञे।



# श्रीमहात्मा हंसराजः

श्रीमहात्मा हंसराजः केवलतायास्साधुतायाश्चावतारः शिक्षण-कलाया मर्मज्ञः श्रद्धायास्सद्भावनायास्सदाचारस्य च प्रशान्त आचार्यो विरराज । आदर्शश्च त्यागस्य रेजे ।

१८६१ एकषष्ट्यधिकाष्टादशशततमे ख्रिस्ताब्दे पञ्चनदीये होशियारपुरमण्डले बेजवाडानामके ग्रामे भव्यस्यास्य बभूवोद्भवः । एतस्य जनकस्य शुभाभिधानं श्रीचुन्नीलालो भल्ला मातुश्चाभिख्या श्रीमती हरदेवी विललास । एनस्य सहोदरस्य नामधेयं श्रीमुल्कराज इति बभौ । दशवर्षदेशीयायुष्येवामुष्य पिता दिवं ययौ ।

देहावसानात्पूर्वमेवैतयोः पिता— मदीयौ तनयौ भाग्यवन्तौ भावुकौ भविष्यतः । मां कोऽपि कथयतीव कर्णे यद् दारिद्र्यमिदानीं नाधिककालं स्थास्यति । अस्मत्कुले ह्यज्ञानमपि न निरन्तरमवस्थास्यत इति । तदनुसारं महात्मा देशराजो निधिनिलयसञ्चालने महात्मा-हंसराजश्च लोकसेवायां शिक्षाकार्ये चामरं यशो लेभे ।

पितृचरणमरणानन्तरमग्रजभ्राता श्रीमुल्कराजस्तु [देशराजः] लवपुरीयेऽधिकोषे नियुक्तोऽभूत् । श्रीहंसराजश्च लवपुरे मिशनपाठ-शालायामध्ययनमारभत । निसर्गत एवैष महानम्रो मधुरभाषी धर्मपरायणश्च विद्यार्थी समविद्यत । पूर्वजपुरुषाणां निन्दां क्षणमपि सोढुमसौ नाक्षमत । एकदा ईसाईमुख्याध्यापक इतिहासमध्यापयन्न-वादीत्—"प्राचीना आर्या वृक्षाणां पाषाणानाञ्च पूजां चक्रिर इति ।" एतत्कथनं निजार्यजातेरपमानकारकं विज्ञाय नासावसहत सद्यश्च हिन्दूधर्मशास्त्रस्य प्रमाणं दत्त्वा— हिन्दूशास्त्रेषु परमेश्वरमेकं

परिहाय परेषां पूजनं पापं प्रत्यपादीति" प्रत्यभाषत। मुख्याध्यापको निरुत्तरोऽजनिष्ट रोषेण चाभाषिष्ट— "हंसराज ! बहिर्याहि पाठशालायाः" इति। आत्माभिमानी नवयुवको हंसराजस्सपदि शिक्षणगृहाद् बहिरगात्। यावच्च स्वयं मुख्यशिक्षकस्तं पुनः शिक्षणालयप्रवेशस्यादेशं नादात् तावत्स शालां नागमत्। विद्यार्थिकालेऽपि हंसराजमानसे महर्षिदयानन्दप्रतिपादितानां वैदिकराद्धान्तानां महान् प्रभावोऽवर्तत।

१८८० ई० वर्षे मैट्रीकपरीक्षां समुदतारीदयम्। लवपुरे च राजकीयमहाविद्यालये शिक्षणमादातुमेष प्रारभत। अत्रामुना श्रीलालालाजपतरायस्य श्रीपण्डितगुरुदत्तस्य च सहपाठिरूपेण सुसङ्गतिरलभ्यत। इमे त्रयस्सुहृदस्सहृदया एकविचारास्सन्तो महर्षेश्चानन्यभक्तास्समवर्तन्त। १८७७ मिते ख्रिस्ताब्देऽमी लवपुरं समासदन्। तस्मिन्नेव हायने तत्रार्यसमाजस्य स्थापना समजायत। श्रीलालासाईंदासमहोदयः प्रमुख आसीदार्यसमाजस्य। एषु मित्रेषु तस्य प्रधानस्य परमः प्रभावोऽपतत्। लवपुरीयार्यसमाजेन साप्ताहिकमेकमांग्लपत्रं प्राकाश्यत। यस्य सम्पादनकार्यं श्रीपण्डिते गुरुदत्ते हंसराजे चाभूत्।

१८८३ मित ईशवीयाब्दे दशममासस्य त्रिंशत्तमे दिनांके मुनीन्द्रश्रीदयानन्ददेवस्य स्वर्गमनमभूदिति तस्य समुचितं स्मारकं निर्मातुमार्यपुरुषेषूदपद्यत विचारः। निश्चयोऽभूद्यद्— "दयानन्दांग्लवैदिकमहाविद्यालय" उद्घाटनीयः। [डी० ए० वी० कालेजनामा।] यस्मिन् हिन्दीसाहित्यमांग्लसाहित्यं संस्कृतप्राचीनसाहित्यं वेदानाञ्चाध्ययनं कार्येत।"

श्रीमता हंसराजेनैतदर्थमात्मनः सेवाऽपि विना वेतनमेव समर्पिताऽऽसीत्। अग्रजात् ५०) रु० पञ्चाशन्मुद्रा मासि मासि साहाय्यमादत्त वदान्योऽयम्। वैदिकमहाविद्यालयाय ३२०००) रु०

द्वात्रिंशत्सहस्ररूप्यकास्तु लब्धाः । आर्यपुरुषा निराशा अवर्तन्त तथापि प्रबल उत्साहः प्रदर्शितो महाभागेन । १८२६ मिते ख्रिस्ताब्दे "दयानन्दांग्लवैदिकमहाविद्यालय" उद्घाटितोऽभूत् तत्रैषोऽवेतनिकतया मुख्याध्यापककार्यं कर्त्तुमुपचक्रमे । तदनु विद्यालयोऽयं क्रमशः एम० ए० पाठ्यक्रमपर्यन्तशिक्षणदाता (कालेजः) महाविद्यालयस्समजायत । तस्य चासौ [प्रिंसिपलः] आचार्यो नियुक्तोऽभूत् ।

काशीगतहिन्दूविश्वविद्यालयस्य संस्थापकः श्री पं० महामना मदनमोहनो मालवीय इव तस्मात्पूर्वमेव "डी० ए० वी०" कालेजस्य संस्थापकस्सञ्चालकः श्रीमहात्मा हंसराजोऽमरनामा बभूव संसारे । एतर्हि त्वेतेन कालेजेन साकमायुर्वेदौद्योगिकमहाविद्यालयावपि चलतस्स्म । सहैवानुसन्धानविभागोऽप्यविद्यत । परं हा हन्त !! भारतविभाजनेन सममेव यवनव्याघ्रैः सकलं तत्प्रलयं प्रापितम् । यया मितव्ययितयाऽस्य महाविद्यालयमण्डलस्य सञ्चालनं विहितमासीत्तया सञ्चालकानां त्यागस्यादर्शो नयनातिथीक्रियते स्म । स्वयं महात्मा श्रीहंसराजः स्वनिर्वाहहेतवे आजीवनसदस्यरूपतः प्रतिमासं पञ्चसप्ततिरूप्यकानगृह्णात् । अमुना त्यागवीरेण निजसहयोगिष्वपि अयमेव त्यागभावो जागरितः कृतोऽभूत् ।

श्रीमतो लालासाईंदासमहोदयस्य पश्चादार्यसमाजस्य प्रबन्धस्य सञ्चालनस्य च धूरपि तत्रभवत्स्कन्ध एव न्यपप्तत् । तत्समये भवदीयं वयः पञ्चविंशवर्षकल्पमविद्यत । संस्कृतंसाहित्यस्याप्युत्तमविचारकोऽभवदार्यः । डॉक्टरव्यूपमहाशयोऽमुष्य विदग्धतायां विमुग्ध आसीत् · पञ्चविंशतिसंवत्सरान् कार्यं कृत्वाऽऽसौ १९११ ईशवीयहायन आचार्यपदान्मुक्तिं गृहीतवान् । तदनु १९१८ ई० पर्यन्तं कालेजप्रबन्धसमितेरध्यक्ष एषोऽस्थात् । पश्चादेतत्पदमपि परित्यज्य धर्मप्रचारकृत्ये दत्तचित्तोऽवर्तत । चिरकालमयं पञ्चापसिन्धुबलोचस्थार्यप्रतिनिधिसभायाः प्रधानो व्यराजत ।

१९१४ ख्रिस्ताब्देऽस्य ज्येष्ठ आत्मजो लालाबलराजः 'एम०ए०' वर्गेऽध्यगीष्ट। लवपुरषड्यन्त्रस्याभियोगे प्रगृहीतोऽभूदेषः। पौर-आरक्षिणोऽमुष्य निकेतनाद् वेदादिपुस्तकान्यप्याददत। ऐषम एव महात्मनो धर्मपत्नी दिवं गतवती। इमे उभे अपि विपत्ती बृहता धैर्येण समसहिष्ट मनीषी हंसराजः।

स्वदेशीयवस्त्रधारणस्य स्वदेशजवस्तूपयोगकरणस्य च पवित्र-भावनाऽस्मिन् महात्मनि महर्षेर्दयानन्दस्य सदुपदेशैस्तस्मात्कालादेव बद्धमूलाऽभूद् यस्मिन् काले लोकसमुदायस्स्वदेशीयनाम्ना परिचितो नाविद्यत।

१८३८ ई० वर्षे दशमे मासे महात्मायं रुग्णशय्यामाशिश्रिये। एकादशमासस्य चतुर्दशे दिनांके निशायामस्य महाभागस्य बभूव देहावसानम्। अन्तकालेऽपीश्वरभक्त एष महत्यां चेतनावस्थायां प्रसन्नतापूर्वकम्— 'ईश्वर! तवेच्छापूर्णा भवेददिति" व्याहृत्य गायत्रीमन्त्रपाठं विधाय "ओ३म्" जपन्नेव प्राणविसर्जनं चकार। अमुष्मिन्त्समयेऽमुष्य मनीषिण आयुरष्टसप्ततिवर्षयुक्तं संववृते।

एतस्य सज्जनस्य जीवनकाल एव हैदराबादराज्यवर्तिसत्याग्रह-संग्रामनिश्चयस्सञ्जातोऽभूत्। आगामिन्नेव मासे सोलापुर आर्यसम्मे-लनं सम्पन्नम्। १९३९ ई० एकोनचत्वारिंशदुत्तरैकोनविंशतिशतमिते ख्रिस्ताब्दे जनवरीमासे आर्यसत्याग्रहोऽतीववेगेन समारब्धोऽभवत्। पूजनीयस्य महात्मनो हंसराजमहोदयस्य शुभाशीर्वादमादेशञ्चादायैव सत्याग्रहसंग्रामस्य तृतीयः सर्वाधिकारी श्रीखुशहालचन्दो [आनन्द-स्वामी] हैदराबादस्थे निजामराज्ये प्रचारं कर्त्तुं सोलापुरं सम्प्राप्तो-ऽभूत्। ६०० षट्शतसंख्याकैरार्यसत्याग्रहिसैनिकैः साकं सत्याग्रहसंगरे स महात्मा खुशहालचन्द आर्यनेता युध्यमान आसीत्।

# आचार्यो रामदेवः

आचार्यश्रीरामदेवस्य जनिरमृतसरमण्डलस्य पुजवाडाख्यग्रामे १८८१ ई० वर्षे जुलाईमासस्यैकत्रिंशद्दिनांके समजनि। श्रीमतः पितुरभिधानं लालाचन्दूलाल इत्यासीत्। यः शिक्षणस्य कार्यमकुरुत शैशवकालादेव रामदेवस्य शिक्षणस्य समुचिता व्यवस्था समजायत। पञ्चदशवर्षायुषि सोऽयं दयानन्दांग्लवैदिकमहाविद्यालये [डी०ए०वी० कालेजे] लवपुरगते प्रविष्टोऽभूत्।

महाविद्यालयशिक्षणेन सममेवासौ वादविवादे लेखलेखने व्याख्यानदाने सार्वजनिककर्मसु भागग्रहणे चापि प्रकृष्टां रुचिमदधात्। अस्यार्यसमाजकृत्येऽतिमात्रमनुराग उदपद्यत। इयदवधि प्रेमादोऽवर्धत यत्तदानीन्तनीयदयानन्दांग्लवैदिकमहाविद्यालयस्याचार्यो महात्मा हंसराज एनं यावन्महाविद्यालयशिक्षणं समाप्तं न भवति तावद् वेदप्रचारादिकार्यकृते धनसंग्रहणान् न्यरुणत्। समैधतायं मतभेदोऽतितरामिति महाविद्यालयमयमत्यजत्। जालन्धरांग्लविद्यालयस्यैष मुख्याध्यापकोऽभवत्। तत एवासौ बी० ए० परीक्षां समुदतारीत्।

महात्मा मुन्शीरामः [स्वामी श्रद्धानन्दः] १९०१ ख्रिस्ताब्दे कांगड़ीगुरुकुलमस्थापयत्। तदीयदृष्टौ सम्प्राप्तोऽयं शिक्षणविचक्षणो रामदेव इति तदाग्रहेणं १९०५ मिते ख्रिस्ताब्दे कार्यहेतुना गुरुकुले न्यमन्त्रयत महात्माऽसौ। एष योग्यतया समुत्साहेन कार्यसम्पादनसंलग्नतया च गुरुकुलस्य निरतिशयसहायतामकरोत्। तस्मादेव समयादसौ महामतिः स्वं समस्तं जीवनं वस्तुतः समर्पितवानेव गुरुकुलसंस्थायै। व्यदधादयं पर्याप्तं परिवर्तनं गुरुकुलशिक्षणपद्धतौ। वर्तमानसमयानुसारं प्रत्येकविषयपाठनकालं निश्चित्यासौ पाठनस्य सुप्रबन्धमकार्षीत्।

१९१७ ई० संवत्सरे महात्मनि श्रीमुन्शीरामे संन्यासे गृहीते सत्येष गुरुकुलस्याचार्यपदे मुख्याधिष्ठातृस्थाने च नियुक्तः कृतः। हायनद्वयपर्यन्तं निरन्तरमनयोः पदयोः कार्यं कुर्वाण आसीदयम्। तदनन्तरं पुनर्गुरुकुलमागतः स्वामी श्रद्धानन्दः। असौ चार्यसमाजस्य कार्यकरणाय पञ्चनदप्रदेशमगच्छत्।

१९२० मिते ख्रिस्ताब्दे राष्ट्रिय आन्दोलने निजांशमादातुं संन्यासी श्रद्धानन्दो गुरुकुलात्प्रस्थितवान्। अतः पश्चादाचार्यः स पुनर्गुरुकुलस्य कार्यधुरं धारितवान्। अस्मिन् वारे गुरुकुलस्याधिकोन्नतये महत्कार्यं कृतमाचार्येण। आयुर्वेदमहाविद्यालयस्य वेदमहाविद्यालयस्य चापि पृथग् योजना विहिताऽमुना।

आचार्यवर्यो गुरुकुलस्यार्थिकीं समस्यां समाधातुं सदा पूर्णं प्रयत्नं कुरुते स्म। यत्र यत्रायं गुरुकुलार्थमर्थसंग्रहणाय याति स्म तत्र तत्रैव पूर्णतया साफल्यं लभते स्म। तत्रभवानेकवारं अफ्रीकादेशेऽपि भ्रमणमकरोत्। तस्माच्चासन्नैकलक्षरूप्यकान्त्संगृह्यानैषीदेषः। कियत्कालानन्तरं पञ्चापार्यप्रतिनिधिसभायाः कार्यकर्तृभिः साकं मतभेदनिमित्तेन विरोधेन श्रीमान् गुरुकुलात् पृथग्भूत आसीत् परन्तु कुलपतिस्वरूपतोऽत्रभवान् गुरुकुलस्य सेवां विहितवान्।

केवलं गुरुकुलरूपेणैवार्यसमाजसेवां नायं व्यदधात् परमेकसुयोग्यलेखकत्वेनापि तां व्यतनोत्। "वैदिक मैगज़ीन" नाम्नीमांग्लमासिकपत्रिकां सम्पादितवानसौ बहुयोग्यतया। "प्राचीनभारतस्येतिहास"मप्यलिखदेष महत्या प्रवीणतया।

व्यज्ञायताऽयमेको निर्भयो नेताऽऽर्यसमाजस्य। स्वदेशीयवस्तूनां नितान्तं भक्त आसीदेषः। अमन्यतायं राजनीतिं धर्मस्यैकं बृहदङ्गम्। राजनीतिवार्तासु सदैव भागमगृह्णादसौ। श्रीमतः प्रयत्नेन बहवो भारतनेतारः समये समये गुरुकुलमागमन्। महात्मा गान्धीमहोदय प्रभावितोऽभूदतितरां गुरुकुलकार्यमवलोक्य।

१९३२ ई० वत्सरे राष्ट्रियसंग्रामे प्रकाशरूपेणैष भागमग्रहीत् कारागृहञ्चागमत् । ऐच्छदयं तु "यत्प्रत्येक आर्यसमाजसभ्यो निर्भीकः सत्यः स्वदेशभक्तः स्वराज्यवादी च सम्पद्येत । वैदिकधर्माभ्युत्थानेन सममेव स्वदेशोन्नतिसम्पादनं प्रधानं कृत्यमस्ति ।"

अत्रभवता कन्यागुरुकुलसंस्थापनं विधाय नारीजातेस्समुत्थानाय प्रशस्यं कार्यं कृतम् । इयमुपयोगिनी संस्था सम्प्रति देहरादूननगरे सफलतापूर्वकं प्रचलतितराम् ।

आचार्यस्याचरणं व्यवहरणमशनं पानमतीवसाधारणं बभूव । परिधानीयवाससामाडम्बरः कदापि नास्मै रुरुचे । आर्यसमाजस्य सम्मुखेऽतिमहत्यां समस्यायामुपस्थितायामप्यसौ लेशमात्रमपि न चिन्तयामास । किन्तु निर्भयो भूत्वा महतोमहीयःसङ्कटं सोढुं सर्वेभ्योऽग्रसरः संववृते । आर्यसमाजेऽमुष्य भूयिष्ठासीत्प्रतिष्ठा । अस्याः केवलमिदमेवाभवत्कारणं यदेष एकः कर्मवीरस्त्यागी पुरुषर्षभः सम्बभूव ।

पश्चिमे वयसि विपश्चिदपश्चिमोऽयं रोगाक्रान्त आसीत् । रुग्णावस्थायामप्येष आर्यसमाजानामसामान्ये समारोहे भागं जग्राह । संयुक्तप्रान्तीयार्यप्रतिनिधिसभायाः स्वर्णजयन्तीप्रसङ्गे मयराष्ट्रपत्तनमुपाययौ महाभागः । तदानीमेतस्य स्वास्थ्यमतीव विकृतमभूत् । तथाप्यपूर्व उत्साहोऽभवदेनस्य मनसि । मुखपाकविकारेऽपि प्रायतिष्ट भाषितुमयम् । अन्ततो विवशेनामुना कर्गले लिखित्वाऽऽत्मभावाः प्रदर्शिता अभूवन् ।

अथ द्विवर्षव्यापिनं दीर्घव्याधिमनुभूयात्रभवान् १९३९ मित ईशवीयेऽब्दे दिसम्बरे नवमदिनांके प्रभाते सार्द्धपञ्चवादने देहरादूननगरे लोकादस्मात् परलोकं प्रतस्थे ।

इति द्वादशार्येन्द्राणां चारुचरितामृते प्रथमो भागः पूर्णः ।

# लेखकस्य प्राप्य-पुस्तकानि

| | | |
|---|---|---|
| १. | दयानन्ददिग्विजयः (द्वौ भागौ) | १०-०० |
| २. | चारुचरितामृतम् | १-०० |
| ३. | छन्दःशास्त्रं वृतिमङ्गलासमेतम् | २-०० |
| ४. | काव्यालङ्कारसूत्राणि | १-२५ |
| ५. | विरजानन्दचरितम् | १-०० |
| ६. | नारायणस्वामिचरितम् | -७५ |
| ७. | गुरुकुलशतकम् | -५० |
| ८. | ब्रह्मचर्यमहत्त्वम् | -६५ |
| ९. | ब्रह्मचर्यमहत्त्वम् | -५० |
| १०. | प्रकृतिसौन्दर्यम् | १-०० |
| ११. | कुमुदिनोचन्द्रः | ४-०० |
| १२. | दयानन्दलहरी | १-२५ |
| १३. | दिव्यानन्दलहरी | -७५ |
| १४. | सुखानन्दलहरी | -५० |
| १५. | गिरिराजगौरवम् | -२० |
| १६. | ईशोपनिषत्काव्यम् | -४० |
| १७. | साहित्यसुधा १ भागः | १-५० |

प्राप्तिस्थानम्—

**हरयाणा-साहित्य-संस्थान, गुरुकुल झज्जर, रोहतक ।**

# स्वामी ओमानन्द जी की रचनायें

| | |
|---|---|
| १. बलिदान (सचित्र) | १२.०० |
| २. शेरशाह सूरी | .७५ |
| ३ वीर हेमू | .७५ |
| ४. मांस मनुष्य का भोजन नहीं | १.०० |
| ५ ब्रह्मचर्यामृत | .२० |
| ६. बाल विवाह से हानियां | .१० |
| ७. स्वप्नदोष चिकित्सा | .२० |
| ८. बिच्छू विष चिकित्सा | .२० |
| ९. पापों की जड़ (शराब) | .२० |
| १०. हमारा शत्रु (तम्बाकू) | .२० |
| ११. नेत्र रक्षा | .२५ |
| १२. व्यायाम का महत्त्व | .२५ |
| १३. राम राज्य कैसे हो | .२० |
| १४. हरयाणा के वीर यौधेय | ७.०० |
| १५. ब्रह्मचर्य के साधन १—२ भाग | .३० |
| १६. ,, ,, ३ भाग (दन्त रक्षा) | .२० |
| १७. ब्रह्मचर्य के साधन ४ भाग (व्यायाम सन्देश) | १.०० |
| १८. ,, ५ ,, (स्नान, संध्या, यज्ञ) | .४० |
| १९. ,, ६ ,, (प्राणायाम) | १.०० |
| २०. ७, ८ ,, (सत्संग, स्वाध्याय) | .५० |
| २१. ,, ९ ,, (भोजन) | .६५ |
| २२. ब्रह्मचर्य के साधन १० भाग (निद्रा) | .४० |
| २३. ब्रह्मचारी की मेखला (११ भाग) | .६० |
| २४. रूस में १५ दिन | .५० |
| २५. हरयाणा का संक्षिप्त इतिहास | .५० |
| २६. वीरभूमि हरयाणा | ४.०० |

प्रकाशक — हरयाणा साहित्य संस्थान गुरुकुल झज्जर । दूरभाष ४४